# एतस्य अङ्कस्य विशेषाः



भल्लूकमान्त्रिकः १३



श्रीनाथस्य मार्गदर्शनम् (वेतालकथा) १९



पुराणकथावली १३



विष्णुपुराणम् - १ ४५

## अन्तरङ्गम्



ग्राहकशुल्कम् -
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -
Subscription Division
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal,
CHENNAI - 600 097
E.mail :
subscription@chandamama.org

शुल्कविवरणम्
वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



संस्थापकौ -
चक्रपाणिः नागिरेड्डी च

# संरक्ष्यतां सम्पत्तिः

मानवानां, पशूनां, पक्षिणां च जीवनं भवति अमूल्यम् । न केवलं तावत्, सस्यादीनां जीविनाम् अपि जीवनम् अमूल्यम् एव । सर्वे जीवनाय एव जाताः । किन्तु दौर्भाग्यस्य विषयः नाम मानवः कदाचित् स्वसन्तोषाय अन्यान् मानवान् पीडयति, जीविनः नाशयति, परिसरं कलुषीकरोति वा । शान्त्या जीवनीयम् अस्माभिः । पशुपक्षिप्रभृतीनां जीविनां नाशनाय पदं न निधातव्यं कदापि । यः परिसरः अस्मान् रक्षति तस्य नाशाय न कदापि प्रयासः विधेयः ।

जगति अन्यविधा अपि सृष्टिः अस्ति । स्मारकाणि, भवनानि इत्यादीनि अत्र अन्तर्भवन्ति । एतानि मानवेन सृष्टानि भवन्ति । मानवस्य भावना, कल्पनाशक्तिः, विजयशीलता, प्रसिद्ध्याकाङ्क्षा इत्यादयः एतादृश्याः सृष्टेः कारणानि भवन्ति प्रायः ।

शतात् वर्षेभ्यः पूर्वम् अत्र विदेशीयानां शासनम् आसीत् । ते भारतीयपरम्पराविषये किञ्चित्प्रमाणेन आदरवन्तः आसन् एव । अतः ते १९०४ तमे वर्षे भारतीयस्मारकाणां संरक्षणाय विधिं निर्मितवन्तः । स्वातन्त्र्यप्राप्तेः अनन्तरं भारतसर्वकारेण, अन्याभिः काभिश्चित् स्वायत्तसंस्थाभिः च भारतीयानां स्मारकाणां संरक्षणाय, सुस्थितिरक्षणाय, जीर्णावस्थानिवारणाय च विविधाः प्रयासाः कृताः ।

एतत् वर्षम् अधिकदिनयुक्तं वर्षम् । अतः 'एतादृशानि स्मारकाणि संरक्षणीयानि' इत्येतं सन्देशं प्रसारयितुम् एकं दिनम् आधिक्येन प्राप्तम् अस्ति । अतः अस्माकं परम्परायाः संरक्षणाय, संरक्षणं करणीयम् इत्येतस्य सन्देशस्य प्रसाराय च वयं विशेषप्रयासं कुर्याम ।

सम्पादकः - विश्वम्







# सकलानन्दस्य उपायः

खान्देडग्रामे प्रतिसप्ताहं विपण्यां सर्वेषां वस्तूनां पशूनां च विक्रयणं प्रचलति स्म । दूरादपि जनाः तत्र आगच्छन्ति स्म ।

शिवानन्दः कश्चन कृषिकः । कृष्यर्थं सः उभौ वृषभौ क्रेतुम् इष्टवान् । अतः सः खान्देडग्रामं प्रति गतः । सः खान्देडग्रामं यदा प्राप्तवान् तावता रात्रिः अभवत् । अतः सः निश्चितवान् यत् कस्याञ्चित् धर्मशालायां वासः करणीयः इति । यद्यपि तत्र चोरभीतिः न आसीत् तथापि शिवानन्दः स्वसमीपे स्थितानि पञ्चशतं रूप्यकाणि धर्मशाला-स्वामिनः देवनारायणस्य हस्ते सुरक्षितं स्थापयितुं दत्तवान् ।

प्रातः विपणिं गन्तुं सिद्धः सः – 'गते दिने दत्तं धनं ददातु' इति देवनारायणं प्रार्थितवान् ।

देवनारायणः आश्चर्यं प्रकटयन् पृष्टवान् – ''पञ्चशतं रूप्यकाणि ? कदा वा दत्तानि ? भवान् किं मां मूर्खं चिन्तयति ?'' इति

तस्य एतादृशेन उत्तरेण शिवानन्दः नितरां भीतः । सः दुःखेन पृष्टवान् – ''मया ह्यः रात्रौ भवते पञ्चशतं रूप्यकाणि न दत्तानि किम् ? मया उक्तमपि यत् श्वः प्रातः विपणिं प्रति गमनसमये स्वीकरिष्यामि इति'' इति ।

''पञ्चशतं रूप्यकाणि न, अपि तु पञ्च वराटिकाः अपि भवान् न दत्तवान् । भवान् असत्यं वदन् अस्ति'' इति देवनारायणः कोपेन उक्तवान् ।

अनेन शिवानन्दः किङ्कर्तव्यतामूढः सन् विना वचनं ततः बहिः आगतः । तस्य तादृशीं दीनां परिस्थितिं दृष्ट्वा कश्चन ग्रामीणः खेदस्य कारणं पृष्टवान् । समग्रं वृत्तान्तं श्रुत्वा सः ग्रामीणः शिवानन्दम् उक्तवान् – ''भवतः धनं पुनः प्राप्तुं कश्चन उपायः विद्यते । पश्यतु, तत्र स्थितस्य मार्गस्य अन्ते कश्चन वटवृक्षः अस्ति । तस्य पार्श्वे एकं गृहम् अस्ति । तत्र सकलानन्दनामकः बुद्धिमान् चतुरश्च कश्चन निवसति । तम् आत्मनः कष्टं वदतु । ततः समस्यापरिहारः भविष्यति'' इति ।

शिवानन्दः सकलानन्दस्य समीपं गतः । तदा सः मञ्चे उपविश्य किमपि पठन् आसीत् । शिवानन्दः स्वस्य नाम, स्वग्रामस्य नाम इत्यादिकम् उक्त्वा जातां वञ्चनां च अवदत् ।

"यद् जातं तस्य विषये चिन्ता मास्तु । इदानीं भवता एकं कार्यं कर्तव्यम् । पुनरेकवारं पञ्चशतं रूप्यकाणि आनेतव्यानि । आगामिनि गुरुवासरे पुनः तस्यामेव धर्मशालायां भवता वासः करणीयः । पूर्ववदेव तद् धनं तस्मै दत्त्वा सुरक्षितं स्थापयितुं वदतु । दानसमये भवता सह राममन्दिरस्य अर्चकमपि नयतु । तस्य अर्चकस्य पुरतः भवान् तस्मै धनं ददातु" इति सकलानन्दः उक्तवान् ।

शिवानन्दः तथैव गुरुवासरे अर्चकेन सह आगत्य पञ्चशतं रूप्यकाणि सुरक्षितं स्थापयितुं देवनारायणाय दत्तवान् ।

अनन्तरदिने प्रातः एव सकलानन्दस्य गृहं गत्वा - "इदानीं मया किं करणीयम् ?" इति तं पृष्टवान् ।

"इदानीं तत्र गत्वा पञ्चशतं रूप्यकाणि प्रत्यर्पयतु इति तं वदतु" इति सकलानन्दः उक्तवान् ।

शिवानन्दः प्रत्यागत्य देवनारायणं पञ्चशतं रूप्यकाणि ददातु इति उक्तवान् । गतदिने अर्चकस्य पुरतः एव धनं स्वीकृतम् इति कारणतः देवनारायणः किमपि अवदन् धनं प्रत्यर्पितवान् । एतदनन्तरं शिवानन्दः पुनः सकलानन्दस्य समीपम् आगत्य - "मया एतत् न ज्ञातं यत् पूर्वं मया दत्तं धनं कथं वा पुनः प्राप्तव्यम् इति" इति ।

"अत्र कापि समस्या नास्ति । सायम् अर्चकेन सह धर्मशालां गत्वा देवनारायणं पञ्चशतं रूप्यकाणि पृच्छतु" इति सकलानन्दः उक्तवान् ।

शिवानन्दः तथैव अर्चकेन सह धर्मशालां गत्वा स्वेन दत्तं धनं पृष्टवान् । देवनारायणः विना वचनं तस्मै पञ्चशतं रूप्यकाणि अपि प्रत्यर्पितवान् ।

सन्तुष्टः शिवानन्दः सकलानन्दस्य समीपम् आगत्य धनं प्रतिप्राप्तुं कृतस्य साहाय्यस्य निमित्तं धन्यवादं समर्पितवान् । तदा सकलानन्दः हसन् - "धनविषये सर्वदा जागरूकता आवश्यकी । वञ्चकाः वनं, धर्मशाला, मार्गः इत्यादिषु सर्वेषु भवन्ति एव" इति उक्तवान् ।





# जयसिंहः

जयपुरीं राजा श्यामसिंहः पालयति स्म । तस्य एकः एव पुत्रः - जयसिंहः इति । श्यामसिंहः स्वपराक्रमेण पार्श्वस्थानि लघूनि राज्यानि स्वायत्तीकृत्य जयपुरीं विशालां कृतवान् आसीत् ।

पुत्रः जयसिंहः शस्त्रविद्यासु राजविद्यासु च कौशलवान् आसीत् । पुत्रः जयसिंहोऽपि मत्सदृशः समर्थः राजा भवेत् इति इच्छति स्म श्यामसिंहः । किन्तु जयसिंहस्य अस्मिन् विषये अभिरुचिः एव न आसीत् । सः सर्वदा चिन्तामग्नः इव व्यवहरन् राजप्रासादे एव तिष्ठन् समयं यापयति स्म ।

पुत्रं सन्तुष्टं कर्तुं, तस्मिन् उत्साहं पूरयितुं च प्रयतमानः श्यामसिंहः राजभवने सुन्दरीणां नर्तकीनां नृत्यव्यवस्थां कारितवान् । सङ्गीतविदुषां सभा अपि तेन कारिता । किन्तु ततः अपि कोऽपि लाभः न जातः । जयसिंहः पूर्ववत् एव आसीत् ।

जयसिंहः राज्यस्य दक्षिणभागे स्थितं पर्वतप्रदेशं प्रति असकृत् गच्छति स्म । प्रकृतिसौन्दर्ये लीनः सन् आनन्देन तत्रैव कानिचन दिनानि वसति स्म । जयसिंहस्य एतं विचित्रव्यवहारं पिता श्यामसिंहः सम्यक् ज्ञातवान् ।

एकदा सः स्वपुत्रम् अवदत् - ''पुत्र ! भवतः एतत् औदासीन्यं, जीवने प्रदर्श्यमानाम् अनासक्तिं च दृष्टवति मयि चिन्ता जायते । समुद्रस्य तरङ्गः इव स्थितेन भवता कस्मिंश्चिदपि विषये आसक्तिः न प्रदर्श्यते । सर्वदा चिन्ताग्रस्तः इव दृश्यते भवान् । अस्य कारणं किम् ?'' इति ।

तदा जयसिंहः मन्दस्वरेण उक्तवान् - ''पितः ! तादृशं गभीरं कारणं किमपि नास्ति एतस्य । एतादृशे आडम्बरजीवने मम आसक्तिः नास्ति । अहम् एतस्याः जीवनशैलीतः दूरे स्थातुम् इच्छामि । मम मनः सर्वदा किमपि नूतनम् आविष्कारं कर्तुम् इच्छति । तस्मात् राजभवनात् दूरे भवितुम् इच्छामि अहम् । कृपया एतदर्थम् अनुमतिं



ददातु'' इति ।

श्यामसिंहः झटिति किमपि न उक्तवान् । किञ्चिद् विचिन्त्य सः उक्तवान् - ''पुत्र ! भवान् विजयपुर्याः भावी राजा । मम वचनं श्रद्धया शृणोतु । कासाञ्चन राजकुमारीणां चित्राणि पश्यतु । तासु उत्तमां कन्यां चित्वा परिणयतु । विवाहः जीवने आसक्तिम् उत्पादयेत् । अपि च भाविनि काले राज्य-विषयेऽपि आदरः भवेत् भवतः इति मम विश्वासः । अपि च एषा मम आज्ञा अपि'' इति ।

एवम् उक्त्वा राजा पुत्रं राजकुमारीणां चित्राणि दर्शयितुं कलामन्दिरं नीतवान् । चित्रेषु स्थिताः राजकुमार्यः सर्वाः अपि अनुपम-सौन्दर्यवत्यः एव आसन् । किन्तु जयसिंहस्य मनः कस्याञ्चिदपि विषये संलग्नं न अभवत् । पुत्रस्य एतादृशं व्यवहारं दृष्ट्वा राजा श्यामसिंहः साकेतपुर्याः राजकुमार्या साकं पुत्रस्य विवाहं निश्चितवान् ।

केषुचित् एव दिनेषु विवाहोऽपि सम्पन्नः । विवाहदिने रात्रौ नूतना वधूः पत्युः निरीक्षायाम् आसीत् । किन्तु जयसिंहः राजभवनात् अदृश्यः अभवत् । केनापि न ज्ञातं यत् जयसिंहः कुत्र गतः इति । अनया घटनया वधूः मरुद्वती नितान्तं दुःखिता । यतः सा जयसिंहं चित्रपटमात्रे दृष्टवती आसीत् । चित्रे तस्य मुखे स्थितां कान्तिं शौर्यभावं च दृष्ट्वा मनसि एव जय-सिंहस्य पूजां कुर्वती आसीत् सा ।

तद्दिने रात्रौ जयसिंहः कमपि अनुक्त्वा अश्वम् आरुह्य प्रस्थितः । एवं बहुदूरं गतवान् सः । गन्तव्यस्थानं तु तेन न निश्चितम् आसीत् । अनन्तरदिने प्रयाणेन नितरां श्रान्तः सः बुभुक्षया पिपासया च पीडितः सन् जलान्वेषणे निरतः जातः । अरण्ये कुत्रचित् सरोवरः दृष्टः तेन ।

सः अश्वात् अवतीर्य तं सरोवरं प्रति प्रस्थितः । किन्तु सरोवरे किञ्चन दृश्यं तेन दृष्टम् । स्वच्छे सरोवरे जलकन्यकावत् काचन तरुणी तरन्ती आसीत् । तां सुन्दरीं पश्यन् सः आत्मानमपि विस्मृतवान् ।

किञ्चित्कालानन्तरं सा तरुणी सरोवरात् बहिः आगता । तत्र कञ्चन पुरुषं दृष्ट्वा भीत्या आक्रोशनं कर्तुम् उद्युक्ता सा । तावता जयसिंहः सङ्केतं कृतवान् यत् भीतिः कापि मास्तु इति । जयसिंहस्य सङ्केतेन सा तूष्णीम् अभवत् । हस्तसङ्केतेन एव जयसिंहः तां सूचितवान् यत् मत्तः भवत्याः कापि हानिः कथमपि न जायते इति ।

ततः तस्याः समीपम् आगतः जयसिंहः मृदुना स्वरेण तां पृष्टवान् - ''सुन्दरि ! भयं मास्तु । अहं विदेशीयः । पिपासितः अस्मि । भवती का ? गन्धर्वकन्या, उत किन्नरकन्या । भवत्याः परिचयं प्राप्तुम् अहम् उत्सुकः अस्मि'' इति ।

अकस्मात् घटितया घटनया आश्चर्यचकिता सा तरुणी आत्मानं निगूहन्ती उक्तवती - ''मम नाम चन्दना इति । समीपस्थे नगरे एव मम वासः । सामन्तराजस्य कस्यचन पुत्री अहम् । इदानीमेव भवान् इतः शीघ्रं गच्छति चेत् वरम्'' इति ।

तस्याः वचनं शृण्वतः तस्य मनः उल्लास-पूर्णम् अभवत् । तदा एव तेन कश्चन निश्चयोऽपि कृतः यत् कश्चन कालः समीपस्थे अरण्ये पर्वत गुहासु वा मया यापनीयः, एतेषां वृक्षाणां छायासु प्रशान्तं जीवनं करणीयं च इति ।

स्वस्य मनसि आगतं विचारं सुन्दरीं यदा जयसिंहः अवदत् तदा सा - ''अस्माकं सैनिकाः भवन्तं पीडयेयुः कदाचित्'' इति उक्तवती ।

तं विषयं गम्भीरतया अस्वीकुर्वन् सः जयसिंहः तत्रैव उषितुं निश्चितवान् । तदा सा तरुणी काञ्चन पर्वतगुहां प्रदर्श्य - 'तत्र भवतः वासः भवतु' इति सूचितवती । 'प्रतिदिनम् आहारम् अहम् एव आनेष्यामि' इति उक्त्वा सा ततः प्रस्थिता ।

तद्दिनाद् आरभ्य चन्दना जयसिंहाय आहारदानम् आरब्धवती । स्वगृहात् अनेकानि रुचिकराणि भक्षाणि, फलानि, मधुराणि खाद्यानि च आनीय ददाति स्म सा ।



एकस्मिन् दिने सा चित्रं लेखितुम् आवश्यकानि वस्तूनि अपि आनीय – 'एतानि वस्तूनि अरण्ये कुत्रचित् लब्धानि' इति उक्त्वा दत्तवती ।

चित्रलेखनवस्तूनि प्राप्य जयसिंहः नितरां सन्तुष्टः । तेन शीघ्रातिशीघ्रं अनेकप्रकाराणि चन्दनायाः चित्राणि लिखितानि । चित्रेषु तस्याः विविधाः भङ्ग्यः आसन् ।

एवम् एकः सप्ताहः अतीतः । एकदा सूर्योदयसमये जयसिंहं द्रष्टुं चन्दना आगता । तस्याः मुखं विच्छायम् आसीत् । कापि समस्या तां बाधते स्म ।

आगमनानुक्षणं सा – ''महोदय ! भवान् इतः शीघ्रं प्रस्थानं करोतु कृपया । भवान् अत्र वसति इत्येतं विषयम् अस्मज्जनाः ज्ञातवन्तः सन्ति । तान् प्रतिरोद्धुम् अहम् अशक्ता । प्रायः भवान् अपि तान् अवरोद्धुं न शक्नोति'' इति उक्तवती ।

तस्याः वचनं श्रुत्वा निर्भीकः एव जयसिंहः उक्तवान् – ''चन्दने । भवती मम जीवने उत्साहं जनितवती । मम जीवने या अनासक्तिः आसीत् सा भवत्या दूरीकृता । भवत्या विना मम जीवनं शून्यमिव भासते । भवतीम् अहं मम राजधानीं नेष्यामि । मम मातापित्रोः अनुमतिं प्राप्य भवतीम् अहं परिणेष्यामि अपि'' इति ।

अनन्तरक्षणे वृक्षाणां मध्यतः श्यामसिंहः तत्र आगत्य – ''पुत्र ! भवतः इच्छा पूर्णा भविष्यति । एषा कन्या इति मा भावयतु भवान् । एषा भवतः पत्नी मरुद्वती एव'' इति उक्तवान् ।

आश्चर्यचकितं जयसिंहं मरुद्वती प्रणम्य उक्तवती – ''स्वामिन् ! कृपया क्षाम्यतु । अहं भवतः पत्नी मरुद्वती एव । भवन्तम् अनुसरन्ती अहमपि अरण्यम् आगत्य मम पत्न्याः धर्मं पालितवती । अत्र मम कोऽपि अपराधः अस्ति चेत् तं क्षन्तुम् अर्हति भवान् । एतत् सर्वं महाराजस्य आदेशानुसारमेव प्रवृत्तम्'' इति ।

एतदनन्तरं मासे एव श्यामसिंहः राज्यभारं सर्वं पुत्राय जयसिंहाय अर्पितवान् । जयसिंहश्च सन्तोषेणैव राज्यभारं वहन् योग्यया रीत्या राज्यं प्रशास्य जनैः 'पितुः सदृशः पुत्रः' इति प्रशंसामपि प्राप्तवान् ।





# भल्लूकमान्त्रिकः

प्राचीने काले ब्रह्मपुत्रनदस्य तटे किञ्चन घोरम् अरण्यम् आसीत् । तस्मात् अनतिदूरे स्थिते ग्रामे कालीवर्मा नाम कश्चन क्षत्रियः तरुणः वसति स्म । तस्य पिता महायोद्धा आसीत् । सः चन्द्रशिलानगरे राजास्थाने कश्चन सैनिकाधिकारी आसीत् । कस्मिंश्चित् युद्धे पराक्रमेण युद्धं कुर्वन् सः वीरस्वर्गं प्राप्तवान् । तत्काले कालीवर्मा आसीत् दशवर्षीयः । पत्युः मरणम् असहमाना तदीया माता अपि ततः अचिरात् एव मरणं प्राप्तवती । बलभद्रः नाम कश्चन विश्वासपात्रभटः कालीवर्माणं पोषितवान्, क्षत्रियोचिताः सर्वाः विद्याः अध्यापितवान् च ।

कालीवर्मा यदा विंशतिवर्षीयः युवकः जातः तदा बलभद्रः कदाचित् तम् अवदत् - ''कालीवर्मन् ! इतः परं भवता एतं लघुग्रामं परित्यजता राजधानी गन्तव्या । तत्र राजास्थाने योग्यस्य उद्योगस्य प्राप्तये प्रयासः करणीयः'' इति ।

तदा कालीवर्मा अवदत् - ''चन्द्रशिलानगरस्थः राजा जितकेतुः असमर्थः भीरुः च । एतादृशस्य राज्ञः आस्थाने स्थित्वा उदरम्भरणाय प्रयासः किं महते अपमानाय न ? अतः अहम् अत्रैव स्थास्यामि । आजीविकायै कमपि उपायं चिन्तयिष्यामि च'' इति ।

क्षणकालं विचिन्त्य वृद्धः बलभद्रः अवदत् - ''राज्ञः शासनस्य दक्षता तदीयान् अधिकारिणः अवलम्बते । जितकेतोः पिता महापराक्रमी आसीत् । भवत्पितृसदृशाः



प्रतापवन्तः बुद्धिमन्तः तस्य आस्थाने आसन् । तस्य दिवङ्गतेः अनन्तरं जितकेतुः सिंहासनम् आरूढवान् । स्वार्थिनः मिथ्याप्रशंसापराः च तं परितः स्थिताः सन्ति । अतः शासनस्य एषा स्थितिः'' इति ।

''स्यान्नाम तथा । किं मया एकाकिना राज्ञः, एतस्य देशस्य च उद्धारः कर्तुं शक्यः ? सर्वथा न खलु ? अतः एव एतस्मिन् एव ग्रामे वासं कृत्वा भूमिं क्रीत्वा कृषिः करणीया इति अहं सङ्कल्पितवान् अस्मि'' इति अवदत् कालीवर्मा ।

''भवादृशस्य क्षत्रियस्य उचितं कर्म न एतत् । अन्यच्च, मरणसमये भवतः पित्रा किं सूचितम् आसीत् इति किं भवान् जानाति ?'' इति उक्त्वा बलभद्रः कालीवर्माणं कस्यचित् प्रकोष्ठस्य समीपं नीतवान्, यश्च अद्यावधि न उद्घाटितः आसीत् । तालम् अपनीय प्रकोष्ठम् उद्घाट्य कालीवर्माणम् अन्तः नीतवान् सः ।

तत्र तदीयेन पित्रा उपयुक्तानि विविधानि आयुधानि, कवचः शस्त्रं, सुवर्णत्सरुणा युक्तः खड्गः इत्यादीनि आसन् । बलभद्रः कालीवर्मणा कवचं धारयित्वा खड्गं तदीयायां कटौ बद्ध्वा अवदत् – ''एतेषां कवचायुधादीनां दर्शनात् भासते यत् एतानि भवन्निमित्तम् एव सज्जीकृतानि इति । क्षत्रिययुवकरूपेण जीवनं कुर्वता भवता सार्थकता प्राप्तव्या इति भवतः पितुः इच्छा आसीत् । इतः परं भवान् यथा इच्छति तथा भवतु नाम'' इति ।

पित्रा धृतानां कवचखड्गादीनां धरणात् कालीवर्मणि कश्चन अपूर्वः उत्साहः उत्पन्नः । सः कोषात् खड्गम् आकृष्य तस्य धारायाः तीक्ष्णतां परीक्षितवान् । खड्गस्य चाकचक्यतां निशिततां च पश्यन् सः अवदत् – ''बलभद्रवर्य ! अहं मम पितुः आदेशम् अवश्यं पालयिष्यामि । मम भविष्यस्य उज्ज्वलतां निर्णेष्यति न हलाग्रम्, अपि तु खड्गस्य निशिता धारा'' इति ।

एतत् श्रुत्वा बलभद्रः नितरां सन्तुष्टः जातः । अनन्तरदिने कालीवर्मा कवचं धृत्वा खड्गं कटौ बद्ध्वा मार्गव्ययाय शतं सुवर्णमुद्राः स्वीकृत्य अश्वम् आरुह्य स्वस्य ग्रामात् वेगेन प्रस्थितवान् ।

मध्याह्नपर्यन्तं कालीवर्मणः प्रयाणम् अरण्यमार्गे निर्विघ्नं प्रवृत्तम् । मध्याह्ने तेन चिन्तितं यत् पाथेयत्वेन आनीताः रोटिकाः खादित्वा किञ्चित् विश्रम्य अग्रे प्रयाणम् अनुवर्तनीयम् इति । अतः सः जलम् अन्विष्यन्

कस्याश्चित् निर्झर्याः समीपं गतवान् । तत्र कस्यचित् वृक्षस्य उपरि उपविष्टवतः वेदना-मिश्रितः ध्वनिः श्रुतः तेन ।

कालीवर्मा मुखम् उन्नीय शाखासु दृष्टिं प्रसारितवान् । तावता कश्चन वृद्धः वृक्षात् पतितः एव । कालीवर्मा झटिति तस्य समीपं गतवान्, तं पृष्टवान् च - "आर्य ! एतस्याम् अवस्थायां भवता किमर्थं वृक्षः आरूढः आसीत् ?" इति ।

वृद्धः क्षणकालं कालीवर्माणं परीक्षादृष्ट्या दृष्ट्वा अवदत् - "वत्स ! दर्शनात् तु भासते यत् भवान् कश्चन राजभटः स्यात् इति । भवन्तः तु धान्यसङ्ग्रहसमये धान्यानां बलात् स्वीकाराय प्रतिवर्षम् आगच्छन्ति । अन्येषु समयेषु न दृश्यन्ते खलु भवादृशाः अत्र ?" इति ।

अहं राजभटः नास्मि । कमपि उद्योगं प्राप्तुं राजधानीं गच्छन् अस्मि । तदास्तां तावत् । भवता मम प्रश्नानाम् उत्तरं न दत्तम् एव । भवतः हस्तपादादयः न भग्नाः खलु ? भाग्यशाली अस्ति भवान्" इति अवदत् कालीवर्मा ।

वृद्धः उत्थाय कानिचन पदानि स्थापयित्वा सन्तुष्टिप्रदर्शनपूर्वकं शिरः चालयन् अवदत् - "भवता यथा उच्यते तथा भाग्यशाली एव अस्मि अहम् । अन्यथा एतद्दिवसे लुण्ठाकैः यत् आक्रमणं कृतं तदा गृहे एव तिष्ठन् अहं तैः गृहीतः सन् नानाकष्टानि अन्वभविष्यम्" इति ।

वृद्धस्य वचनस्य श्रवणात् कालीवर्मणा वस्तुस्थितिः किञ्चित् प्रमाणेन अवगता इव ।



'लुण्ठाकाः यदा आक्रमणं कृतवन्तः तदा पलाय्य एषः वृक्षे निलीय स्थितवान् । ग्रहणशैथिल्यकारणात् अधः पतितः च' इति अचिन्तयत् कालीवर्मा ।

"तात ! एतस्मिन् प्रदेशे लुण्ठाकानां पीडा अधिका इति मया अपि श्रुतम् अस्ति । किन्तु मया न ज्ञातम् आसीत् यत् ते दिनकाले एव आगत्य एवं लुण्ठनं कुर्वन्ति इति । भवतः ग्रामे स्थिताः अन्ये कुत्र गताः ?" इति पृष्टवान् कालीवर्मा ।

"वत्स ! लुण्ठाकानां ग्रामप्रवेशं दृष्ट्वा सर्वे ग्रामीणाः इतस्ततः पलायितवन्तः सन्ति । लण्ठाकानां निर्गमनस्य अनन्तरम् एकैकशः ते ग्रामं प्रत्यागमिष्यन्ति" इति अवदत् सः वृद्धः ।

राज्ञः विषये सर्वं जानन् अपि कालीवर्मा

वृद्धस्य अभिप्रायं ज्ञातुम् इच्छन् पृष्टवान् - ''तात ! भवन्तः लुण्ठनविषयं राजानं न उक्तवन्तः किम् ?'' इति ।

तदा सः वृद्धः उपेक्षाभावेन अवदत् - ''अस्माकं कथनात् पूर्वम् एव राजभटाः आगताः आसन् । किन्तु तत् न अस्माकं रक्षणाय, अपि तु धान्यस्य सङ्ग्रहाय । तेषां नयनस्य अनन्तरं यत् अवशिष्टं तत् एते लुण्ठाकाः अपहृतवन्तः सन्ति'' इति ।

तावता तत्र उपस्थिताः चत्वारः लुण्ठाकाः उपहासमिश्रितेन स्वरेण उक्तवन्तः - ''वृद्धेन युक्तम् एव उक्तम् । अग्रिमे वर्षे राजभटानाम् आगमनात् पूर्वम् एव आगत्य वयम् एव सर्वाणि धान्यानि नेष्यामः'' इति ।

ततः ते खड्गम् आकृष्य गृहीत्वा कालीवर्माणम् अवदन् - ''कवचखड्गाश्वादीनां दर्शनात् भासते यत् भवत्समीपे धनं स्यादेव इति । धनस्य ग्रन्थिं भूमौ संस्थाप्य चत्वारि पदानि पृष्ठतः तिष्ठतु'' इति ।

कालीवर्मा तान् चतुरः अपि जनान् सकृत् परीक्षादृष्ट्या दृष्ट्वा खलीने बद्धं पाथेयबन्धम् आनीय भूमौ स्थापयित्वा चत्वारि पदानि पृष्ठतः स्थापितवान् । एतत् दृष्टवान् कश्चन चोरः त्वरया आगत्य तं बन्धं स्वीकर्तुम् अवनमनं कृतवान् । तावता कालीवर्मणः खड्गः तस्य शिरसः छेदम् अकरोत् । अनन्तरक्षणे अन्ययोः उभयोः अपि सा एव गतिः जाताः । तदा चतुर्थः लुण्ठाकः आक्रन्दनं कुर्वन् ततः पलायितुम् उद्युक्तः । तावता कालीवर्मा वेगेन गत्वा तं केशेषु गृहीत्वा पादेन कटौ प्रहृतवान् द्वित्रवारम् । ततः तं वृद्धसमीपम् आकृष्य आनीतवान् च ।

स्वस्य नेत्रयोः पुरतः एव जातं त्रयाणां लुण्ठाकानां मरणं, चतुर्थस्य ग्रहणं च दृष्ट्वा



आश्चर्यम् अनुभवन् वृद्धः अवदत् - ''अहो, कीदृशम् अपूर्वं साहसम् एतत् ! मम ग्रामे भवत्तः अपि बलवत्तराः सन्ति एव बहवः तरुणाः । किन्तु ते कदापि एवं लुण्ठाकानां सम्मुखीकरणे मतिं न कृतवन्तः । सर्वथा धैर्यहीनाः ते'' इति ।

''एतादृशं कार्यं तेषां द्वारा कारयित्वा एव अहं राजधानीं गमिष्यामि । आहारसेवनचिन्ता अनन्तरं भवतु । भवान् एतं पाथेयग्रन्थिं स्वीकृत्य ग्रामं प्रति गमनाय मार्गम् उपदिशतु । अहम् एतं लुण्ठाकं गृहीत्वा अश्वेन सह भवतः अनुसरणं करिष्यामि'' इति अवदत् कालीवर्मा ।



वृद्धः कालीवर्मा च यावत् ततः निर्गन्तुम् उद्युक्तौ तावता केचन ग्रामवासिनः तत्र आगत्य अपृच्छन् - ''आर्य ! किं प्रवृत्तम् ? आगताः ते के आसन् ?'' इति ।

कालीवर्मा तान् घृणायुक्तया दृष्ट्या पश्यन् अवदत् - ''भवत्सु कोऽपि अन्धः अस्ति इति तु मम न भाति । आक्रमणाय आगताः लुण्ठाकाः सम्मिलितैः सद्भिः सर्वैः भवद्भिः सम्मुखीकरणीयाः आसन् । किन्तु भवन्तः भीरवः इव पलाय्य अरण्यं प्रति गतवन्तः आसन्'' इति ।

एतत् श्रुत्वा ते जनाः लज्जया शिरः अवनमय्य स्थितवन्तः ।

वृद्धः तान् प्रवृत्तं सर्वम् उक्त्वा - ''ऋते वृद्धेभ्यः, सर्वे युवकाः एतं धीरं नायकं मत्वा एतस्य मार्गदर्शनस्य अनुगुणं अरण्ये वसन्तः लुण्ठाकान् सम्मुखीकुर्युः । वयम् एवं कति दिनानि गृहादिकं परित्यज्य अरण्ये वासं कर्तुं शक्नुयाम ?'' इति अवदत् ।

एतत् श्रुत्वा अङ्गीकारपूर्वकं शिरः चालयन् कालीवर्मा अवदत् - ''मया यत् वक्तव्यम् इति चिन्तितम् आसीत् तत् एषः वृद्धः एव उक्तवान् अस्ति । यः इदानीम् अस्माभिः गृहीतः तस्य द्वारा लुण्ठाकानां वसतेः विवरणं प्राप्तुं शक्नुयाम वयम् । भवत्सु ये दण्डचालनं जानन्ति ते माम् अनुसरन्तु । सप्ताहं यावत् अत्र स्थित्वा लुण्ठाकान् नाशयित्वा एव अहम् इतः गमिष्यामि'' इति ।

एतदनन्तरं ग्रामीणाः कालीवर्माणं ग्रामं नीतवन्तः । ग्रामे उत्सवः आचरितः । ग्रामजनाः पार्श्वस्थग्रामान् गत्वा दृढकायान् तरुणान् आनीतवन्तः । लुण्ठाकाः कथं सम्मुखीकरणीयाः इति विषये कालीवर्मा तेभ्यः प्रशिक्षणं दत्तवान् ।

कालीवर्मणा यः गृहीतः आसीत् सः

भीत्या कम्पमानः सन् अरण्यस्थायां गुहायां कति जनाः निवसन्ति इति, तत्र गमनाय गुप्तमार्गः कः अस्ति इति च विस्तरेण अवदत् ।

कालीवर्मा ग्रामीणैः सह गत्वा हठात् आक्रमणं कृत्वा बहून् लुण्ठाकान् संहृतवान् । ये सजीवं स्थातुं शक्तवन्तः ते राज्यसीमाम् अतिक्रम्य अन्यराज्यं प्रति गतवन्तः ।

एवं लुण्ठाकपीडां निवार्य कालीवर्मा राजधानीं प्रति प्रस्थितवान् । पञ्चदश दिनानि प्रयाणं कृत्वा सः अरण्यम् अतिक्रम्य राजधानीसीमां प्राप्तवान् । तत्र दश अश्वारोहिणः तम् आक्रान्तवन्तः आकस्मिकतया । एतत् अनिरीक्षितम् आसीत् इत्यतः कोषात् खड्गं स्वीकर्तुम् अपि अवसरं न प्राप्तवान् कालीवर्मा ।

अश्वदलस्य नायकः कालीवर्माणं तीक्ष्णदृष्ट्या पश्यन् अवदत् – "भवान् एव खलु कालीवर्मनामकः ? राज्यस्य लुण्ठाकान् पार्श्वराज्यं प्रति प्रेषयन् धृष्टतां प्रदर्शितवान् भवान् एव खलु ?" इति ।

"आम् । एतत् कार्यं मया एव कृतम् । एतादृशं कार्यं कृतवान् अहं भवद्भिः सादरं राजसमीपं नेतव्यः आसम् । किन्तु भवन्तः तु कञ्चित् अपराधिनम् इव माम् आक्रान्तवन्तः सन्ति । किम् एतत् उचितम् ?" इति आश्चर्येण पृष्टवान् कालीवर्मा ।

एतत् श्रुत्वा उच्चैः हसन् अवदत् अश्वदलनायकः –"भवता महान् अपराधः कृतः अस्ति । इतः निर्गताः लुण्ठाकाः पार्श्वराज्ये लुण्ठनम् आरब्धवन्तः सन्ति । अस्माकं राज्ञा एतत् कारितम् इति मत्वा प्रतिवेशिराजः नितरां क्रुद्धः जातः अस्ति । सः इदानीम् आक्रमणं घोषितवान् अस्ति । एतत्सर्वं भवतः कारणात् एव प्रवृत्तम् । अतः भवन्तं शूलम् आरोप्य भवतः शवं प्रतिवेशिराजाय प्रेषयिष्यामः वयम्" इति ।

"किं राज्ञः जितकेतोः इव भवताम् अपि विवेकः सर्वथा नष्टः अस्ति ?" इति वदन् कालीवर्मा खड्गं ग्रहीतुम् उद्युक्तः । तावता ते सैनिकाः झटिति अग्रे आगत्य तं बन्दीकृत्य अश्वस्य उपरि आरोप्य राजधानीं प्रति वेगेन प्रस्थितवन्तः ।

– *(अनुवर्तते)*



## वेताल-कथा

# धीनाथस्य मार्गदर्शनम्

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! भवान् लक्ष्यसिद्धये यादृशं परिश्रमं करोति तादृशः अन्येन केनापि कर्तुं न शक्यः । भवतः सहनाशक्तिः प्रशंसनीया एव अस्ति । प्रायः राजानः मार्गदर्शनाय मन्त्रिणः राजगुरोः वा नियुक्तिं कुर्वन्ति । ग्रामाधिकारिणः अपि तथैव । महाज्ञानिनः सन्तोऽपि क्वचित् अनुचितं मार्गदर्शनं कुर्वन्ति ते सहायकाः । तत् तैः बुद्ध्या क्रियते इति न । अकस्म्भवति तत् । मम तु प्रश्नः - भवान् कस्य मार्गदर्शनं प्राप्य एतादृशे कार्ये



कर्मणि प्रवृत्तः अस्ति इति ? राज्ञः या कथा सा एव भवति ग्रामाधिकारिणः अपि । एकः राजा, अपरः ग्रामाधिकारी इत्येतावदेव अन्तरं तत्र । अत्र उदाहरणरूपेण धीनाथनामकस्य विदुषः कथां श्रावयामि । सश्रद्धं शृणोतु –

श्रीपुरनामकस्य ग्रामस्य मुख्यस्य प्रबला इच्छा आसीत् यत् मम ग्रामः अन्येभ्यः ग्रामेभ्यः उत्कृष्टतमः स्यात् इति । एताम् इच्छां क्रियान्वितां कर्तुं सः धीनाथनामकं मार्गदर्शकत्वेन नियुक्तवान् आसीत् ।

कोऽपि यदि अपराधं करोति तर्हि तस्मै कीदृशः दण्डः दातव्यः इति सम्यक् विचिन्त्य व्यवहारमार्गं सूचितवान् आसीत् धीनाथः । अतः ग्रामजनाः कदाचित् ज्ञातुं न शक्नुवन्ति स्म यत् कस्य कार्यस्य निमित्तं दण्डः प्राप्यते, कस्य च निमित्तं पुरस्कारः इति । तथापि तेषां विश्वासः तु आसीत् यत् अस्मद्विषये न्याय्यः व्यवहारः एव भवति इति ।

त्रिमूर्तिः तस्मिन् एव ग्रामे निवसति स्म । सः पञ्चाशद्वर्षीयः । कदाचित् सः व्याधिग्रस्तः जातः । गृहे धनस्य सम्पादयिता अन्यः कोऽपि न आसीत् । तस्मात् तदीयः पुत्रः त्रिकामः भिक्षायाचनम् आरब्धवान् । कदाचित् सः धीनाथस्य गृहं प्रति भिक्षायाचनाय आगतः । तदा धीनाथः तम् अवदत् – ''भवान् विंशतिवर्षवयस्कः अस्ति । दृढकायः अपि अस्ति भवान् । यावत् पिता सम्पादयति स्म तावत् भवान् सुखेन प्रवृद्धः । यदा सः अस्वस्थः जातः तदा भवान् भिक्षायाचनम् आरब्धवान् । तरुणस्य दृढकायस्य भवतः भिक्षायाचनम् अपराधाय एव । तथापि भवता ऐदम्प्राथम्येन दोषः कृतः इत्यतः दण्डः न दीयते मया । इतः परं भिक्षा न याचनीया ग्रामे । यदि कदाचित् भिक्षां याचन् भवान् दृश्येत तर्हि कठोरतया दण्ड्येत'' इति ।

धीनाथस्य वचनं त्रिकामे महतीं भीतिम् अजनयत् । अतः सः ग्रामं परित्यज्य पलायितवान् । एतस्मात् त्रिमूर्तिः अनाथः जातः । एतत् ज्ञात्वा धीनाथः ग्रामाधिकारिणम् अवदत् – ''ग्रामे स्थितानाम् अनाथानां विकलाङ्गानां च योगक्षेमस्य निर्वहणं ग्रामाधिकारिणः कर्तव्यम् । अतः त्रिमूर्तेः शुश्रूषायै भवता कापि व्यवस्था करणीया । तस्य आहारादिव्यवस्थां ग्रामजनाः निर्वहन्तु । प्रतिदिनम् एकैकस्मात् गृहात् कश्चित् गत्वा त्रिमूर्तेः सेवां करोतु'' इति ।

एषा सूचना ग्रामाधिकारिणः सन्तोषाय न जाता । अतः सः अवदत् – ''त्रिमूर्तेः पुत्रस्य

उपस्थितौ एव यदि भवता एषा चिन्तिता स्यात् तर्हि सः प्रायः ग्रामं परित्यज्य पलायनं न अकरिष्यत् । ग्रामजनाः पर्यायेण त्रिमूर्तेः व्यवस्थां पश्येयुः चेदपि त्रिमूर्तिना भिक्षा प्राप्ता इव । पुत्रस्य भिक्षायाचनं निषेधितवता भवता पितुः भिक्षायाचनम् आदिष्टम् इव'' इति ।

''त्रिकामः न हि अनाथः, विकलाङ्गः वा । स्वस्थः दृढकायः सः । तादृशस्य भिक्षायाचनम् अपराधाय । त्रिमूर्तिः स्वयं भिक्षायाचनाय न उद्युक्तः । तेन अप्रार्थिते अपि वयम् एव तस्य साहाय्यम् आचरन्तः स्मः । साहाय्यस्वीकरणम् अन्यत् । भिक्षायाचनम् अन्यत् । तयोः अभेदचिन्तनं न युक्तम्'' इति अवदत् धीनाथः ।



धीनाथस्य कथनं युक्तम् अमन्यत ग्रामाधिकारी श्रीनाथः । अतः सः त्रिमूर्तेः शुश्रूषार्थं व्यवस्थां कल्पितवान् ।

श्रीपुरे केचन दुष्टाः अपि आसन् । तेषु भीमः, रङ्गः, मङ्गलश्च अन्यतमाः । ते कदाचित् परस्परं समालोच्य श्रीनाथसमीपं गत्वा अवदन् - ''अस्माकं मातापितरः वृद्धाः । तेषां पालनपोषणं कर्तुम् अशक्नुवन्तः स्मः वयम् । अतः अस्माकं निवेदनं यत् ग्रामसभायाम् अस्मभ्यम् उद्योगः दापनीयः इति । ततः यत् वेतनत्वेन प्राप्यते तेन धनेन वयं मातापितॄन् पोषयिष्यामः'' इति ।

''ग्रामसभायाम् उद्योगावकाशः नास्ति इदानीम्'' इति अवदत् श्रीनाथः ।

''यदि भवता उद्योगः न दीयेत तर्हि अस्माभिः उद्योगान्वेषणाय अन्यः ग्रामः गन्तव्यः भवेत् । तदा अस्माकं वृद्धानां मातापितॄणां पोषणं भवता कारणीयं भवेत्'' इति अवदत् भीमः । अन्यौ शिरश्चालनेन तत् वचनं समर्थितवन्तौ ।

एतावता धीनाथः तत्र आगतः । सः सर्वं ज्ञात्वा तान् त्रीन् अवदत् - ''ग्रामवासिनाम् असहायानां योगक्षेमस्य निर्वहणं श्रीनाथवर्यस्य दायित्वम् । तत् सः चिन्तयिष्यति । किं भवन्तः ग्रामं परित्यज्य गन्तुं सिद्धाः ?'' इति ।

''अस्माभिः किमर्थं ग्रामः परित्यक्तव्यः ? अन्यत्र किमर्थं वा गन्तव्यम् ?'' इति ते त्रयः पृष्टवन्तः रोषेण ।

एतस्मात् श्रीनाथः क्रुद्धः । सः त्रयाणां बहिष्कारं घोषितवान् । तदीयाः भटाः तान् ग्रामात् बहिः प्रेषितवन्तः ।

श्रीनाथः किञ्चित्कालस्य अनन्तरं धीनाथम् अवदत् - ''एवं क्रियते चेत् न जाने, कतीनां परिवाराणां पालनपोषणादिव्यवस्था मया



करणीया भवेत् इति'' इति ।

''अस्थाने भीतिः मास्तु भवतः । भीमः, मङ्गलः, रङ्गः च दुष्टाः । तान् ग्रामात् निष्कासयता भवता युक्तम् एव कृतम् । एतत् दृष्टवान् कोऽपि इतः परं ग्रामे एतादृशं दुस्साहसं कर्तुं न अर्हति । मम तु भाति यत् त्रिकामः अचिरात् एव ग्रामं प्रत्यागत्य क्षमायाचनां कुर्यात् इति'' इति वदन् धीनाथः श्रीनाथे धैर्यं पूरितवान् ।

एतदनन्तरकाले ग्रामे कोऽपि दुष्टतायां मतिं न कृतवान् । अतः श्रीनाथः धीनाथाय मनसि एव कृतज्ञतां समर्पितवान् ।

अचिरात् एव श्रीनाथेन अवगतं यत् त्रिकामः, भीमः, रङ्गः, मङ्गलः च पार्श्वस्थे सत्यपुरनामके ग्रामे वसन्तः श्रमं कुर्वन्तः धनं सम्पादयन्ति इति । तेषां व्यवहारे इतोऽपि पूर्णपरिष्कारः न जातः आसीत् । ते कदा तदा निन्दन्ति स्म यत् अस्माकं कष्टस्य कारणं श्रीनाथः एव इति ।

''ते दोषं कृतवन्तः आसन् । अतः मया दण्डः विहितः । यावत् ते स्वस्य दोषं नावगच्छन्ति तावत् तेषाम् उद्धारः न भविष्यति'' इति धीनाथम् अवदत् श्रीनाथः ।

एतस्याः घटनायाः सप्ताहस्य अनन्तरं श्रीनाथस्य मनसि विचारः आगतः यत् मया स्वयं सत्यपुरं गत्वा तेषां स्थितिः परीक्षणीया इति । ततः तत्र गमनाय सः एकं वृषभशकटं व्यवस्थापितवान् । वृषभौ दृढकायौ आस्ताम् । शाकटिकः अपि शकटचालने अनुभवी आसीत् । श्रीनाथः शकटम् आरुह्य सत्यपुरं प्रति प्रस्थितवान् ।

सत्यपुरं प्रति गमनावसरे वीरपुरं, ध्रुवपुरं, गृहपुरम् इत्यादयः अतिक्रमणीयाः आसन् । गृहपुरम् अतिक्रम्य श्रीनाथस्य शकटः यावत् वीरपुरसमीपं गतः तावता शकटस्य एकं चक्रं महाशिलया कयाचित् घट्टितं जातम् । एतस्मात् श्रीनाथः शकटात् पतितः, व्रणं प्राप्य विसंज्ञः जातः च । शकटचालकः अपि अधः अपतत् । शकटस्य एकं चक्रं तदुपरि अगच्छत् । तस्मात् सः उत्थातुं न शक्तवान् ।

एतस्मिन् समये भीमः कस्यचित् कार्यस्य निमित्तं सत्यपुरात् ध्रुवपुरं प्रति गच्छन् आसीत् । तेन एतत् दृष्टम् । सः झटिति शकटं समीकृत्य शाकटिकं श्रीनाथं च तस्मिन् एव शकटे आरोप्य ध्रुवपुरीयस्य प्रसिद्धस्य वैद्यस्य समीपं नीतवान् ।

वैद्यः सर्वं परीक्ष्य अवदत् -



''शाकटिकः तु अचिरात् एव स्वस्थः भविष्यति । किन्तु श्रीनाथः सप्ताहानन्तरम् एव सचेतनतां प्राप्नुयात् । एतस्य शुश्रूषार्थं केनचित् अत्रैव भवितव्यम्'' इति ।

श्रीनाथस्य सेवार्थं कस्यचित् नियोजनं करणीयं चेत् धनम् आवश्यकम् । तावत् धनं भीमसमीपे न आसीत् । किं करणीयम् इति सः यदा चिन्तयन् आसीत् तदा वैद्यः अवदत् – ''एतं मत्समीपे स्थापयित्वा चिकित्सां कर्तुम् अहं सिद्धः अस्मि । स्वास्थ्यप्राप्तेः अनन्तरं यदि एषः धनदानं निराकुर्यात् तर्हि भवता एव चिकित्साशुल्कं दातव्यं भविष्यति'' इति ।

भीमः वैद्यस्य कथनम् अङ्गीकृतवान् । सः स्वयं श्रीनाथस्य पार्श्वे तिष्ठन् तदीयसेवां कृतवान् । दिनत्रयाभ्यन्तरे श्रीनाथः सचेतनः जातः । पुनः दिनत्रयाभ्यन्तरे श्रीनाथस्य स्वास्थ्ये विशेषप्रगतिः दृष्टा ।

अत्रान्तरे शाकटिकः अपि पूर्णतः स्वस्थः जातः आसीत् । सञ्चारसमर्थः अपि जातः आसीत् सः । सः श्रीपुरं गत्वा श्रीनाथगृहजनान् प्रवृत्तं सर्वम् उक्तवान् । गृहजनाः, धीनाथः, अन्ये केचन ग्रामीणाः च तद्दिने एव श्रीनाथं द्रष्टुं गताः । सर्वे वैद्यस्य भीमस्य च प्रशंसां कृतवन्तः ।

''मया तु वृत्तिधर्मः पालितः । भगवतः कृपा विशेषतः आसीत् । अतः स्वास्थ्यलाभः शीघ्रं प्राप्तः'' इति अवदत् वैद्यः ।

''मया पूर्वं महान् अपराधः कृतः आसीत् । वयं त्रयः अपि भगवन्तं प्रार्थयन्तः आस्म यत् आत्मनः परिष्काराय अवसरं ददातु इति । मयि भगवता कृपादृष्टिः पातिता । अतः अहम् एतस्य सेवाभाग्यं प्राप्तवान्'' इति उत्साहेन अवदत् भीमः ।

श्रीनाथः वैद्याय प्रभूतं धनं दत्त्वा कृतज्ञतां समर्पितवान् । 'गृहं प्रतिगत्य भीमस्य बहिष्कारः अपनेतव्यः, ग्रामसभायां कोऽपि उद्योगः दातव्यः च' इति सः अचिन्तयत् । सः धीनाथं स्वस्य चिन्तनम् अवदत् ।

तदा धीनाथः अवदत् – ''भीमस्य विषये यत् करणीयं तत् स्वयं निर्णेतुम् अर्हति भवान् । एतद्विषये अहं किमपि न वदामि । इतः परं भवता वृषभशकटेन प्रयाणं न करणीयम् । भवता दण्डिताः त्रयः ग्रामात् बहिः सन्ति । ते अपि भवतः अनुग्रहं प्राप्तुम् अवसरं प्रतीक्षमाणाः सन्ति । एतत् न विस्मर्तव्यम् अस्माभिः'' इति ।

वेतालः एवं कथां समाप्य अवदत् - "राजन् ! धीनाथः महापण्डितः स्यात् नाम। तथापि अभिप्रायकथनसमये सः दयां करुणां क्षमां च नाममात्रेण अपि न वहति इति सिद्धम् । भीमस्य साहाय्यं यदि समये न प्राप्तं स्यात् तर्हि श्रीनाथस्य प्राणापायः अभविष्यत् । श्रीनाथः चिन्तयति स्म - एवम् उपकारं कृतवते उद्योगः दातव्यः, तद्द्वारा कृतज्ञता प्रकाशनीया इति। किन्तु धीनाथः एतद्विषये स्वस्य असम्मतिं प्रकाशितवान् । एवं किमर्थं कृतं तेन ? तस्मिन् मानवता, विवेकः, प्राज्ञता च सर्वथा लुप्ता इति एतस्मात् किं न ज्ञायते ? किं धीनाथस्य निर्णयः समुचितः ? मम एतेषां प्रश्नानां समुचितम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति ।

एतत् श्रुत्वा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - "मानवः न मृगः इव । तस्मिन् दया, करुणा, प्रेम इत्यादयः भावाः भवन्ति एव । किन्तु तेषां प्रदर्शनं भवेत् पात्रापात्रविवेकसहिततया । भीमः यद्यपि उपकारं कृतवान् तथापि तस्य व्यवहारे परिष्कारः जातः एव इति न । श्रीनाथस्य कृपां प्राप्तुम् एव सः साहाय्ये उद्युक्तः । तस्मै उद्योगः दीयते चेत् तदीयः व्यवहारः परिष्कृतः भवेत् एव इति निश्चयः नास्ति । अतः उद्योगदानविषये त्वरा मास्तु इति आशयः धीनाथस्य । अन्ये त्रयः अपि एतादृशम् अवसरं प्रतीक्षमाणाः सन्ति इति सः स्मारितवान् । यदि भीमे कृपा दर्श्येत तर्हि ते त्रयः बुद्ध्या श्रीनाथस्य हानिं कल्पयित्वा पुनः साहाय्यं च कृत्वा कृपां प्राप्तुं प्रयासं कुर्युः इति तस्य चिन्तनम् । 'व्यवहारः दीर्घकालं परिशीलनीयः, तदनन्तरम् एव कृपा प्रदर्शनीया, साहाय्यं कृतवते धनादिदानं युज्येत, उद्योगदानं तु क्लेशम् एव जनयेत्' इति धीनाथः चिन्तितवान् । एवं धीनाथस्य चिन्तने पक्वता दृश्यते । तस्य मार्गदर्शनं सर्वथा समुचितम्" इति ।

एतस्मात् राज्ञा मौनभङ्गः कृतः आसीत् । तस्मात् वेतालः शवसहिततया ततः अदृश्यः भूत्वा पुनरपि वृक्षस्य शाखां यथापूर्वम् अवलम्बितवान् ।






## समुद्रस्य अर्चनम्



भारतस्य पश्चिमतीरे निवसन्तः जनाः मकरसङ्क्रमणदिने (तन्नाम जनवरीमासे) समुद्रस्य पूजां कुर्वन्ति । अपारः जलराशिः तैः मातृरूपेण दृश्यते । जलदेवी एव तेषाम् अन्नदात्री । अतः तां ते 'अन्नपूर्णेश्वरी' इति निर्दिशन्ति । एषा साम्प्रदायिकी पूजा तेषु ऐक्यभावनाम् उत्पादयति, परिसरविषये अवधानं दातव्यम् इत्येतं भावं जागरयति, तेषु वृत्तिविषयकं समर्पणभावम् उद्बोधयति, समुद्रे दैवीयभावं दृढीकरोति च ।

गुजरातराज्ये मकरसङ्क्रान्तिः उत्तरदिशि सूर्यस्य गमनारम्भं सङ्केतयति इति भाव्यते । उत्तरायणारम्भकालः सः । अतः वाताटोड्डयनोत्सवः आचर्यते तदा, यत्र जातिमतवयोभेदं विस्मृत्य सर्वे भागं वहन्ति । तदवसरे आकाशः विविधवर्णोपेतैः स्पर्धाङ्कतया ऊर्ध्वगमनोत्सुकैः वाताटैः अभिव्याप्तः भवति । एषः उत्सवः महता उत्साहेन वैभवेन च आचर्यते जनैः ।

## गुहाचित्राणि शिलायुगीयानि

एषु दिनेषु मध्यप्रदेशे प्राप्तानि 'भीमभेट्का'नामकानि भित्तिचित्राणि युनेस्कोसंस्थायाः जागतिकरिक्थ-आवल्यां सद्यः योजितानि । अत्र प्राप्तानि शिलाचित्राणि शिलायुगीयानि (क्रि.पू. ३५००-२०००) । एतानि यासु गुहासु सन्ति ताः गुहाः भोपालस्थे विक्रमविश्वालये कार्यं कुर्वता प्राध्यापकेन डब्ल्यू. वाकणकरवर्येण पञ्चाशतः वर्षेभ्यः पूर्वं अन्विष्टाः । तत्र प्रायः ५०० गुहाचित्राणि सन्ति । महाभारतस्य पात्राणि आधारीकृत्य रचितानि सन्ति तानि चित्राणि । अतः एव पाण्डववंशीयस्य भीमसेनस्य नाम्ना सम्बद्धम् अस्ति एतत् स्थलम् ।



पुराणकथावली - २१

# दण्डव्यामोहस्य कारणतः...



रामः प्रकाशश्च प्रसिद्धस्य वनाचार्यस्य महर्षेः शिष्यौ । उभौ अपि अध्ययने निपुणौ । उपनिषदः, वेदाः, शास्त्राणि च ताभ्यां सम्यक् एव अधीतानि । ताभ्यां काश्चन सिद्धयः अपि प्राप्ताः आसन् ।

वनाचार्यस्य आश्रमः सरयूनद्याः तीरे आसीत् । तस्य गुरुः हिमालये निवसति स्म । कदाचित् कश्चन यात्रिकः आगत्य वनाचार्यम् उक्तवान् - ''भवतः गुरुः भवन्तम् अविलम्बेन द्रष्टुम् इच्छति । अतः भवता हिमालयस्थं तदीयम् आश्रमं प्रति गन्तव्यम्'' इति ।

एतत् श्रुतवान् वनाचार्यः शिष्यान् अवदत् - ''मया इदानीम् एव हिमालयः गम्यते । भवन्तः स्वव्यवस्थां स्वयं द्रष्टुमर्हन्ति'' इति ।

आश्चर्यचकिताः शिष्याः पृष्टवन्तः - ''किमर्थम् एतावती त्वरा ?'' इति ।

वनाचार्यः अवदत् - ''अविलम्बेन गुरोः आज्ञायाः पालनं शिष्यस्य आद्यं कर्तव्यम् । अतः मया गम्यते इदानीम् एव'' इति ।

''गुरुवर्य ! इतः गमनात् पूर्वम् आश्रमस्य सुचारुव्यवस्था निर्विघ्नतया यथा प्रचलेत् तथा करणं वरं खलु ?'' इति अपृच्छत् कश्चन शिष्यः ।

''आश्रमस्थाः स्वस्य व्यवस्थां स्वयं निर्वहेयुः । सर्वं भगवदधीनम् अस्ति'' इति अवदत् वनाचार्यः ।

''कदा प्रत्यागमनं भवेत् ?''

''न जाने । कदाचित् न प्रत्यागच्छेयम् अपि'' इति अवदत् वनाचार्यः ।

इतोऽप्यधिकतया वार्तालापं कर्तुम्

अनिच्छन् सः पार्श्वस्थां नदीम् अतिक्रम्य हिमालयं प्रति प्रस्थितवान् ।

अनन्यगतिकतया रामप्रकाशौ, अन्ये शिष्याः, केचन भक्ताः च नदीक्रमणात् पूर्वं तस्य आशीर्वादं प्राप्य आप्रच्छनम् उक्तवन्तः ।

रामः तस्मिन् एव आश्रमे वासम् अनुवर्तयितुम् इष्टवान् । किन्तु प्रकाशः आश्रमं परित्यज्य स्वग्रामं प्रति गतवान् । तत्र तद्विषये जनानाम् आदरः आसीत् । अल्पे एव काले तेन बहवः भक्ताः प्राप्ताः । सः स्वामी प्रकाशानन्दः इति नाम प्राप्तवान् ।

एवं प्रसिद्धेः प्राप्तेः अनन्तरम् अपि सः पवित्रं जीवनम् एव यापयति स्म । लघुनि कुटीरे वासः । कटे शयनम् । पाकार्थं कानिचन पात्राणि । धरणार्थं काषायवस्त्रयुगलम् । एतावती एव सम्पत्तिः तस्य ।

प्रकाशानन्दः इव रामः अपि स्वामी रामानन्दः जातः आसीत् । तस्य विषये असन्तोषः आसीत् प्रकाशानन्दस्य ।

रामानन्दः वैभवोपेतं जीवनं यापयति स्म । कश्चन धनी भक्तः तस्य वासाय उत्तमं भवनं निर्माप्य दत्तवान् आसीत् । तस्य सेवायै केचन नियुक्ताः आसन् अपि । धनिकस्य गृहे सज्जीकृतः विशेषपाकः सेव्यते स्म रामानन्देन ।

'अहो, मम मित्रस्य दुर्गतिः !' इति अचिन्तयत् प्रकाशानन्दः । 'विषयवासना अधःपतनस्य हेतुः' इति मित्रं ज्ञापयितुम् ऐच्छत् सः । अतः सः कदाचित् रामानन्दस्य आश्रमं प्रति अगच्छत् । तेन रामानन्दविषये यद्यत् श्रुतम् आसीत् तत्सर्वं वास्तविकम् एव आसीत् । सः रामानन्दम् एकान्ते अवदत् - ''मित्र ! वैभवोपेतजीवनयापनं किम् उचितम् ? सम्पत्तिमोहः न युक्तः । एतस्य त्यागः वरम् । इतः दूरं गन्तव्यम् । मम आश्रमम् आगच्छतु । आध्यात्मिकं जीवनं यापयतु च'' इति ।

''यदि भगवतः इच्छा तथा अस्ति तर्हि भवतु नाम'' इति अवदत् रामानन्दः ।



तावता तयोः प्राचीनसुहृत् कश्चित् धावन् आगत्य अवदत् - ''गुरुवर्यः नद्याः अपरस्मिन् तीरे तिष्ठति । सः किञ्चित्कालम् एव तत्र तिष्ठेत् । भवन्तौ द्रष्टुम् इच्छति सः । सः भवन्तौ हिमालयं नेतुम् इच्छति प्रायः'' इति ।

तत् श्रुत्वा प्रकाशानन्दः महता आनन्देन - ''अहो, अहम् इदानीं यदत्र अस्मि तत् तु परमसौभाग्याय जातम्'' इति उक्त्वा क्षीण-स्वरेण स्वगतं पुनः अवदत् - ''एतं विषयम् अहं मम भक्तान् कथं वा वक्तुं शक्नुयाम् इदानीम् ?'' इति ।

तदा रामानन्दः अवदत् - ''तत्सर्वं गुरुवर्यः द्रक्ष्यति'' इति । रामानन्दः शिष्येषु कमपि उद्दिश्य वार्ताप्रेषणे उत्सुकः न आसीत् ।

ततः उभौ अपि सरयूनदीतीरं गतवन्तौ । अपरतीरं प्रति गमनाय काचित् नौका तत्र सिद्धा आसीत् । द्वित्राणाम् एव अवकाशः आसीत् तत्र ।

एतावता प्रकाशानन्दः स्वस्य दण्डं स्मृतवान् । सः दण्डः तस्य प्रियः आसीत् । सुवर्णमुकुटेन राजमानं तत् मसृणम् अपि आसीत् ।

''राम ! भवान् अग्रे गच्छतु । भवतः प्रकोष्ठे मया मदीयः दण्डः त्यक्तः अस्ति । तम् अहम् अचिरात् एव आनेष्यामि'' इति उक्त्वा रामानन्दस्य वसतिं प्रति प्रस्थितवान् प्रकाशानन्दः । रामानन्दः, सः वार्तावाहकः सुहृत् च नौकाम् आरूढवन्तौ । नौका वेगेन अग्रे प्रस्थिता ।

प्रकाशानन्दः अर्धघण्टानन्तरं पुनरपि तीर-समीपम् आगतः । तावता नद्यां प्रवाहः प्रवृद्धः आसीत् । अपरतीरं प्रति गता नौका तत्रैव स्थिता आसीत् । प्रवाहवेगस्य क्षीणता यावत् न भवति तावत् प्रकाशानन्दः अपरं तीरं गन्तुं न शक्नुयात् एव । प्रायः तदर्थं सप्ताहं यावत् प्रतीक्षा करणीया भवेत् ।

प्रकाशानन्दः तीरस्थायाः कस्याश्चित् शिलायाः उपरि उपविश्य खेदेन अचिन्तयत् - 'अहो, मूर्खता मम ! सम्पत्तिमोहः त्यक्तव्यः इति मया सुहृत् उपदिष्टः । सः तु लीलया तत् कृतवान् । इतः निर्गमनात् पूर्वं स्वस्य भक्ताः अपि न सूचिताः तेन । दैवं व्यवस्थापयिष्यति सर्वमपि इति तस्य चिन्तनम् आसीत् । अहं तु आध्यात्मिकजीवनं यापयन् अस्मि इति चिन्तयामि स्म । किन्तु गुरोः मेलनार्थं यः अवकाशः प्राप्तः तस्मात् अहं वञ्चितः अभवं कस्यचित् दण्डस्य कारणेन । दण्डव्यामोहम् अपि अहं जेतुं शक्तः न जातः' इति ।



# वार्ताविशेषः

## 'झैझै' जीविष्यति दीर्घकालम्




'झैझै' - एषः सिंहव्याघ्रयोः अपत्यम् । एतस्य जन्मानन्तरम् १८० दिनानि अतीतानि । तथापि एषः जीवति । एवं जीवन् एषः नवेतिहासं सृष्टवान् अस्ति । एषः गतस्य मार्चमासस्य सप्तविंशतितमे दिनाङ्के चीनदेशस्य हुनान्प्रदेशे स्थिते 'चाङ्ग्शा'वन्यजीव्युद्याने जन्म प्राप्तवान् ।

एवं विभिन्नजातीययोः मेलनात् उत्पन्नः सन्तानः प्रायः अधिककालं न जीवति । किन्तु एषः 'झैझै' शैशवावस्थायाः कण्टकानि अतिक्रम्य किशोरावस्थां प्राप्तवान् अस्ति । 'दीर्घकालं जीविष्यति एषः' इति चिन्तयन्ति वन्यजीविसंरक्षणाधिकारिणः ।

## सैकतशिल्पेन पारितोषिकं प्राप्तम्

बर्लिन्नगरे प्रवृत्तायां सैकतशिल्पनिर्माणस्पर्धायां भागं गृहीतवान् अद्वितीयः भारतीयः ओरिस्साराज्यीयः सुदर्शनपटनायकः । तस्यां स्पर्धायां विविधेभ्यः देशेभ्यः आगताः १९ जनाः भागम् ऊढवन्तः आसन् । रशियादेशीयेन नेदर्ल्याण्ड्देशीयेन च प्रथमं द्वितीयं च स्थानं प्राप्तम् । सुदर्शनपटनायकेन निर्मितेन गणेशशिल्पेन तृतीयं स्थानं प्राप्तम् । सुदर्शनः २६ वर्षीयः । त्रयोदशभ्यः वर्षेभ्यः सः एतस्मिन् सैकतशिल्पनिर्माणकार्ये प्रवृत्तः । सः एतदर्थं काञ्चित् शालां चालयति, यत्र च ५० विद्यार्थिनः सैकतशिल्पनिर्माणस्य अभ्यासं कुर्वन्ति ।



# जीवरक्षिका छाया

कारागृहस्य एकान्ते लघुप्रकोष्ठे चिन्ताक्रान्तः जो एर्डमनः उपविष्टः आसीत् । कस्यचित् राजकीयस्य पुरुषस्य मारणे प्रयत्नः कृतः इति दोषम् आरोप्य सः तत्र आनीतः आसीत् ।

एकस्मिन् सायङ्काले कारागृहस्य अधिकारी आगत्य तम् उक्तवान् यत् भवन्तं द्रष्टुं कश्चन आगतः अस्ति इति । बन्धी स्वस्थानात् उत्थाय आगन्तारं दृष्टवान् ।

''विचलितः मा भवतु मित्र ! अहमस्मि न्यायवादी जान् व्याट्सन् । निश्शुल्कं भवतः न्यायवादित्वेन कार्यं कर्तुम् इच्छामि'' इति उक्तवान् कश्चन उन्नतः मध्यवयस्कः पुरुषः ।

सः न्यायवादी प्रातःकालीनायां पत्रिकायाम् एतस्य प्रकरणस्य विषयं पठितवान् आसीत् । १९१० तमे वर्षे २२ तमे दिनाङ्के मध्याह्ने २.२५ वादनसमये कस्यचन राजजकीय-पक्षस्य नायकः विल्लिव्यानिस्टेरः वायुविहारात् आगमनसमये गृहस्य पुरोभागे कश्चन चर्मस्यूतं दृष्टवान् । एकं सूक्ष्मसूत्रं स्यूतस्य रन्ध्रतः तस्य द्वारस्य ग्राहिकापर्यन्तं बद्धम् आसीत् । सूक्ष्मदृष्ट्या दर्शनात् तेन इदम् अवलोकितम् ।

सः आरक्षकान् सूचितवान् । केचन शोधकाः आगत्य स्यूतम् उद्घाटितवन्तः । तस्य अन्तः स्फोटनोपयोगिनीभिः शलाकाभिः सह काचित् भुशुण्डिका अपि आसीत् । तस्याः नोदनस्थले श्वेततन्तुः बद्धः आसीत् ।

पत्रिकायाः इतिवृत्तपठनात् न्यायवादिनः मनसि केचन संशयाः उत्पन्नाः । महत् वञ्चनाजालम् एव अत्र अस्ति इति तस्य मनसि अभासत । तस्य संशयाः तदा इतोऽपि दृढाः जाताः, यदा च तेन तस्मिन् मध्याह्ने एषा वार्ता श्रुता यत् अपराधित्वेन एतावता एव कश्चन जनः कारागृहे स्थापितः अस्ति इति । अनुपदमेव सः कारागृहं गतवान् ।





बन्धी उक्तवान् - ''मम निमित्तं भवान् स्वस्य समयस्य अपव्ययं मा करोतु कृपया। भवतः सर्वे प्रयत्नाः निष्फलाः भवेयुः। एतत् सत्यं यत् अहं तं राजकीयजनं न इच्छामि इति। अचिरात् एव तेन सह घर्षणम् अपि जातम् आसीत्। मुख्यः अंशः तु मम तादृशः कोऽपि साक्षी नास्ति, यश्च कुकृत्यावसरे मम अनुपस्थितिं प्रमाणीकुर्यात्। अहो ! नास्ति मम सहायकः, न विद्यते कोऽपि साक्षी। आत्मरक्षणाय यावत् आवश्यकं तावत् धनमपि नास्ति मम समीपे'' इति।

एतस्य श्रवणस्य अनन्तरम् अपि जो एर्डमनस्य रक्षणं करणीयम् इत्येवः जान् व्याट्सनस्य निश्चयः कम्पितः न जातः। सः अवदत् - ''भवान् चिन्तां मा करोतु। भवान् दोषी इति समर्थयितुं साक्षिणः अपि न सन्ति।''

सप्त साक्षिणः आगत्य दृढं प्रतिपादितवन्तः यत् मेमासस्य २२ तमे मध्याह्ने २.२५ वादने यदा राजकीयव्यक्तेः गृहस्य पुरतः चर्मस्यूतः दृष्टः तदा जो एर्डमनं तस्मिन् परिसरे एव वयं दृष्टवन्तः इति। तथापि न्यायवादी शान्त-मनस्कः सन् स्थितवान्।

अनन्तरम् आगते प्रमुखसाक्षिण्यौ धृत-दीर्घश्वेतवस्त्रे बालिके। अन्ये सप्त जनाः अपि विचारणासमये उक्तवन्तः आसन् यत् एते द्वे अस्माभिः तत् गृहं परितः गच्छन्त्यौ दृष्टे इति। ताभ्यां कथिता कथा सरला स्पष्टा च आसीत् - ''मेमासस्य तस्मिन् भानुवासरे मध्याह्ने १.५० वादने क्रैस्तमन्दिरतः प्रति-गमनसमये आवां ब्यानिस्टरस्य गृहस्य समीपे गच्छन्त्यौ आस्व। तदा भवनस्य पृष्ठतः वीथ्यां त्वरया गच्छन् एर्डमनः आवाभ्यां दृष्टः'' इति। ते एतदपि उक्तवत्यौ यत् आवां तस्य चतुरस्रविन्यासयुक्तं युतकं, नीलवर्णीयं शिरस्त्रं, तस्य पङ्गुत्वं च स्मरावः इति।

ततः साक्षात् दक्षिणभागे निश्चिते स्थले उपविष्टः आसीत् चतुरस्रविन्यासयुक्तं युतकं धृतवान् अपराधित्वेन परिगणितः एर्डमनः। यदा किञ्चित् चलतु इति उक्तं तदा तदीयं पङ्गुत्वमपि स्पष्टं दृष्टं सर्वैः। नीलवर्णस्य शिरस्त्रं यदा दर्शितं तदा झटिति एव तेन अङ्गीकृतं यत् मम एव एतत् इति।

विचारणाप्रक्रिया समाप्ता एव इति सर्वे अचिन्तयन्। न्यायवादी जान् व्याट्सनः दीर्घं निश्श्वसितवान्। परन्तु सः निराशः न जातः। 'पुनरेकवारं प्रयत्नं करिष्यामि' इति सः



ते द्वे बालिके क्रैस्तमन्दिरस्य पुरतः स्थितवत्यौ आस्ताम् । एतयोः सुस्पष्टसाक्ष्यं सर्वस्य अन्त्यमेव करोति इति तस्य मनसि भावना आगता । तथापि एकाग्रचित्ततया सः भावचित्रमेव पश्यन् आसीत् किमपि स्फुरेत् वा इति चिन्तयन् ।

अनुक्षणं भावचित्रस्य कश्चन लघुः अंशः तस्य अवधानम् आकर्षत् । बहवः विचाराः तस्य मनसि आगताः । कश्चन अंशः अत्र त्यक्तः अस्ति इति तस्य मनसि अभासत । भावचित्रं हस्तेन गृहीत्वा सः क्रैस्तमन्दिरस्थलं गत्वा पुरतः स्थितवान् । उपरि दृश्यते स्म 'बेल्फ्रै' स्तम्भः, यस्य च छाया भूमौ पतिता आसीत् ।

जान् व्याट्सनः शकटिकामेकाम् आरुह्य वीक्षणालयं गतवान् । तत्र सः खगोलतज्ज्ञेन मिलितवान् । ततः सः त्वरया न्यायालयं गतवान् । नूतनं साक्ष्यं मया श्वः आनेष्यते इति उक्त्वा तस्य दिनस्य कार्यकलापानां व्याक्षेपणं कारितवान् ।

परेद्यवि प्रातः न्यायालयः जनैः पूर्णः आसीत् । यतः सर्वत्र वार्ता प्रसृता आसीत् यत् जान् व्याट्सनः कौतुकमेकं प्रकटीकरिष्यति इति ।

व्याट्सनेन स्वस्य साक्षी पुरतः आनीतः । सः आसीत् सुदृढः कश्चन पलितश्मश्रुधारी पुरुषः ।

''महाशय ! भवान् विश्वविद्यालये खगोलशास्त्रस्य अध्यापकः अस्ति खलु ?'' इति अपृच्छत् व्याट्सनः ।

चिन्तितवान् । भारभूतहृदयः सः उत्थाय तयोः भगिन्योः समीपं गतवान् ।

''भवत्यौ क्रैस्तमन्दिरतः बहिः आगत्य किं कृतवत्यौ ?'' इति पृष्टवान् ।

''आवयोः भावचित्रं स्वीकृतम् ।''

''चित्रस्वीकरणस्थलं प्रति एव गतं वा भवद्भ्याम् ?''

''नास्ति । वृद्धः उपदेशकः एव क्रैस्तमन्दिरस्य पुरतः स्थितयोः आवयोः भावचित्रं स्वीकृतवान् ।''

''भावचित्रम् अत्र अस्ति किम् ?''

''आम् । अत्रैव स्यूते अस्ति । एतत् भवान् स्थापयतु । अस्माकं समीपे अन्यत् अस्ति'' इति उक्तवती तयोः अन्यतरा बालिका ।

तदा न्यायाधीशः विरामं घोषितवान् । जान् व्याट्सनः उद्यानं प्रति गतवान् । भावचित्रे एव दत्तदृष्टिः सन् सः वृक्षस्य अधः उपविष्टवान् । भावचित्रे दीर्घश्वेतनिचोलं धृतवत्यौ

"आम् । सत्यम्" इति अवदत् सः ।

"अत्र एकं भावचित्रम् अस्ति । कृपया एतत् सम्यक् परिशीलयतु । कस्मिन् समये एतत् भावचित्रं स्वीकृतम् अस्ति इति किं भवान् वक्तुं शक्नुयात् ?" इति ।

"आम् । अहं न केवलं समयम्, अपि च दिनमपि वक्तुं शक्नोमि" इति उक्तवान् खगोलज्ञः ।

"कथं तावता विश्वासेन वदति भवान् ?" इति अपृच्छत् न्यायवादी ।

समग्रः न्यायालयः स्तब्धः आसीत् । खगोलज्ञः मन्दं स्वश्मश्रु स्पृशन् उक्तवान् - "एतत् तु सरलतमं कार्यम् । अत्र किं भवन्तः छायां द्रष्टुं शक्नुयुः ? एतत् चर्चशिखरस्य छाया । एतस्य कोणस्य आधारेण अहं सुलभतया समयम् अभिज्ञातुं शक्नोमि" इति ।

"तर्हि कदा एतत् स्वीकृतमिति स्पष्टतया कथयतु तावत्" इति उक्तवान् न्यायवादी ।

"एतत् भावचित्रं १९१० तमे वर्षे मेमासस्य २२तमे दिनाङ्के ३.१० वादने स्वीकृतम् अस्ति" इति दृढस्वरेण अवदत् खगोलज्ञः ।

एतस्मात् कथनात् सप्तानां साक्षिणाम्, उभयोः बालिकयोः च कथनं संशयोत्पादकं जातम् । तेषां स्मरणशक्तिः संशयहेतुः जाता । यदि ताभ्यां सः दृष्टः तर्हि तत् तु चर्मस्यूतदर्शनस्य ४५ निमेषेभ्यः परम् एव ।

कोऽपि तं खगोलज्ञं प्रतिप्रष्टुं साहसं न कृतवान् । तस्य गणना निष्कृष्टा स्पष्टा च आसीत् । मुग्धस्य अन्याय्यं न भवेत् इति एकेनैव कारणेन सः आरात्रि गणनादिषु व्यापृतः आसीत् । प्रातः अपि सः स्थलमेव गत्वा अवलोकितवान् आसीत् ।

अन्ततो गत्वा एर्डमनः निरपराधी इति घोषितम् । परन्तु बहूनां मनसि एषः प्रश्नः आसीत् एव यत् कथं भावचित्रस्य छाया एतत्सर्वं साधयितुं शक्ता इति ।

एकस्य वर्षस्य अनन्तरं ते सर्वे तस्मिन्नेव दिने निर्दिष्टे समये भावचित्रं स्वीकृतवन्तः । यदा भावचित्रं दृष्टं तदा अवलोकितं यत् शिखरस्य छाया बालिकयोः भावचित्रे यथा आसीत् तथैव अस्ति इति ।



# वङ्गप्रदेशीया जानपदकथा

# नदीतः प्राप्ताः पुत्राः

पूर्वं कदाचित् कश्चित् प्रजावत्सलः राजा आसीत् । प्रजानां योगक्षेमं सः बहुधा चिन्तयति स्म । सर्वदा सचिवेभ्यः गूढचारेभ्यः च वार्तां सङ्गृह्णाति स्म । जनानां क्लेशाः सन्ति वा इति सर्वदा ज्ञातुकामः भवति स्म सः । अतः सः छद्मवेषेण राज्ये सर्वत्र सञ्चरति स्म । तदा सः जनानां सम्भाषणं शृण्वन् भवति । स्वयमपि तैः सह सम्भाषणं कुर्वन् भवति स्म ।

एकदा सः कस्यचित् सभ्यस्य गृहस्य समीपे गच्छन् आसीत् । मध्यरात्रः अतीतः आसीत् । राजा गृहस्य समीपं गत्वा वातायनम् उद्घाट्य अन्तः दृष्टवान् । अन्तः मन्दः प्रकाशः आसीत् । तत्र प्रचलत् सम्भाषणं सः श्रोतुं शक्नोति स्म । गृहे तिस्रः युवतयः चर्चां कुर्वत्यः आसन् । तासां सम्भाषणस्य विषयः आसीत् – कीदृशः पुरुषः परिणेतव्यः इति ।



तासु एका उक्तवती – ''भवत्यौ जानीतः यत् अहं खाद्यप्रिया इति । अहं राज्ञः पाचकेन परिणीता भवितुम् इच्छामि । तदा अहं राज्ञः राज्ञ्याः च निमित्तं सज्जीकृतानां खाद्यानां रुचिं प्रतिदिनम् अपि आस्वादयितुं शक्नोमि'' इति ।

अपरा अवदत् – ''यदि अहं मन्त्रिणं परिणयेयं तर्हि राज्ये सर्वत्र तेन सह सञ्चारं कर्तुं शक्नुयाम् । प्रतिवेशिराज्यानि अपि द्रष्टुं शक्नोमि । नवीनानां स्थानानां दर्शनं मह्यं नितरां रोचते इति भवत्यौ जानीतः एव'' इति ।

किञ्चित्कालं यावत् कोऽपि स्वरः न श्रुतः । अनन्तरम् आदौ उक्तवती एव पुनः अवदत् – ''किमर्थं भवती मौनेन अस्ति ? भवती कं परिणेतुम् इच्छति ?'' इति ।

तदा राजा तृतीयायाः ध्वनिः श्रुतः – ''यदि राजा मां परिणेष्यति तर्हि अहं तस्मै सुन्दरान् पुत्रान् दास्यामि'' इति ।

अनन्तरम् उपहासद्योतकः हासः अपि श्रुतः ।

राजा ततः शीघ्रं प्रस्थाय राजगृहं प्रति–



गतवान्, चिन्तनम् आरब्धवान् च । एतावता तस्य द्वे पत्न्यौ आस्ताम् । किन्तु तयोः कस्याश्चित् अपि अपत्यं न आसीत् । आत्मना श्रुतानि सम्भाषणानि तिसृणां भगिनीनाम् इति सः ऊहितवान् । तिसृषु या मम विवाहस्य अपेक्षां प्रकटितवती सा तृतीयपत्नीरूपेण मया स्वीकरणीया इति सः निर्णीतवान् ।

परेद्यवि प्रातः सः ताः युवतीः राजगृहं प्रति आनेतुं शिबिकाः प्रेषितवान् । ताः राजसभां प्रति आनीताः ।

राजा तासां पितरम् आहूय पूर्वदिने रात्रौ श्रुतं सम्भाषणं श्रावितवान् । अनन्तरं - ''भवतः ज्येष्ठपुत्र्याः विवाहः राजपाचकेन सह, द्वितीयपुत्र्याः विवाहः मन्त्रिणा सह च व्यवस्थापयिष्यामि'' इति उक्तवान् ।

सभ्याः तृतीयपुत्र्याः विषये राजा किं वदेत् इति कुतूहलेन प्रतीक्षमाणाः आसन् । ते युवत्याः पितुः राज्ञः च मुखं पर्यायरूपेण पश्यन्ति स्म ।

राजा मन्दहासपूर्वकं युवत्याः पितरम् उद्दिश्य - ''अहं भवतः कनीयसीं पुत्रीं मम तृतीयपत्नीरूपेण स्वीकृत्य राज्ञीं कर्तुं सिद्धः अस्मि'' इति उक्तवान् । कनीयस्याः पुत्र्याः आनन्दस्य पारम् एव न आसीत् ।

त्रयः अपि विवाहाः सवैभवं सम्पन्नाः । तिस्रः अपि वध्वः स्वस्य गृहे वासं आरब्धवत्यः । स्वगृहे स्थित्वा अपि अग्रजे तृप्ते न आस्ताम् । यतः प्रासादे अनुजा राज्ञीत्वं प्राप्तवती आसीत् । सहजतया अग्रजयोः मनसि अनुजायाः विषये असूया उत्पन्ना । तथापि अनुजायाः मनसि अग्रजयोः विषये महती प्रीतिः एव आसीत् ।

'अग्रजयोः काचित् राज्ञः परिणयस्य अपेक्षां यदि प्रकटितवती स्यात् तर्हि अहम् अन्यं कञ्चित् परिणयेयम्' इति अनुजायाः चिन्तनम् आसीत् । अतः सा अग्रजे औदार्येण क्षान्तवती ।

किञ्चित्कालानन्तरं राज्ञी गर्भवती अभवत् । सा पतिम् - ''अहं प्रसवकाले अग्रजयोः साहाय्यम् इच्छामि'' इति उक्तवती । राजा झटिति अङ्गीकृतवान् । द्वे अग्रजे आगत्य राजगृहे स्थितवत्यौ ।

यदा शिशुः उत्पन्नः तदा दुष्टे अग्रजे अनुजायाः सेविकया सह कुतन्त्रं विरचय्य शिशुम् एकस्मिन् कण्डोले स्थापयित्वा नद्यां त्यक्तवत्यौ ।

अनन्तरं कञ्चित् बालशुनकम् आनीय



राज्ञ्याः पार्श्वे शाययित्वा – ''भवत्या प्रसूतः शिशुः एषः एव'' इति दर्शितवत्यौ ।

अत्यन्तं खिन्ना राज्ञी – ''भगवतः इच्छा एवं यदि स्यात् तर्हि अहं किं वा कुर्याम् ? अस्तु, एतमेव मम पुत्रत्वेन पालयिष्यामि'' इति उक्तवती ।

अग्रिमे वर्षे अपि राज्ञी सुन्दरं पुत्रं प्रसूतवती । पुनश्च तस्याः अग्रजे शिशुं कण्डोले स्थापयित्वा नद्यां त्याजनस्य व्यवस्थां कृतवत्यौ । अनन्तरं मार्जारशावकं राज्ञ्याः समीपे स्थापितवत्यौ । पुनश्च राज्ञी– ''भगवतः इच्छा'' इति वदन्ती विधिलिखितम् अङ्गीकृतवती ।

अनन्तरवर्षेऽपि सा सुन्दरीं पुत्रीं प्रसूतवती । अग्रजे पुनश्च दुष्टां योजनां कृत्वा अनुजां प्रति – ''भवत्या आत्मसदृशी सुन्दरी मृन्मयी पाञ्चालिका प्रसूता अस्ति'' इति उक्तवत्यौ ।

राज्ञः अपि महती निराशता जाता । सः पूर्वम् आत्मना मध्यरात्रे श्रुतं सम्भाषणं स्मृतवान् । तद्दिने – ''यदि अहं राजानं परिणयेयं तर्हि तस्मै सुन्दरशिशून् दास्यामि'' इति राज्ञा श्रुतम् आसीत् ।

अत्रान्तरे पूर्ववत् राजा राज्ये सर्वत्र छद्मवेषेण सञ्चारम् आरब्धवान् । तदा तेन पुनः पुनः राज्ञ्याः शिशूनां शुनक-मार्जार-पाञ्चालिकानां विषये एव चर्चा श्रुता । केचन ''राज्ञी सामान्या महिला न'' इति, अन्ये केचन – 'मन्त्रवादिनी सा' इति च उक्तवन्तः । अपरे केचन – ''अशुभसूचिकाः एताः घटनाः राज्ये प्रवाहं, साङ्क्रामिकरोगान् वा कारयेयुः'' इति भीतिं प्रकटितवन्तः । इतरे केचन – ''राज्ञ्या राजगृहे वासः न करणीयः'' इत्यपि अभिमतं प्रकटितवन्तः । अतः राजा राज्ञीम् अरण्यं प्रति प्रेषितवान् ।

वस्तुतः राज्ञ्याः अपत्यानां विषये एवं प्रवृत्तम् आसीत् – कश्चित् ब्राह्मणः प्रासादात् अनतिदूरे नद्याः तीरे वसति स्म । एकदा सः नद्यां स्नानं कुर्वन् आसीत् । तदा सः नद्यां प्लवमानं कण्डोलं दृष्टवान् । तस्मिन् नवजातं शिशुं दृष्ट्वा सः आश्चर्यचकितः अभवत् । सः शिशुं स्वीकृत्य पत्न्यै दत्तवान् । तयोः अपत्यं न आसीत् इति कारणतः तं शिशुं पुत्रवत् प्रीत्या पालितवन्तौ तौ ।

अग्रिमे वर्षे पुनश्च ब्राह्मणः तादृशं कण्डोलं प्राप्तवान् । तत्रापि नवजातः शिशुः आसीत् । तं शिशुमपि सः गृहं प्रति नीतवान् । दम्पतीभ्यां लक्षितं यत् द्वयोः बालकयोः बहुधा साम्यम् अस्ति इति ।

तदनन्तरवर्षे पुनः यदा ब्राह्मणः नद्यां

कण्डोलं प्राप्तवान् तदा तस्य आश्चर्यस्य पारम् एव न आसीत् । अस्मिन् अवसरे कण्डोले स्त्रीशिशुः आसीत् । पुनश्च ब्राह्मणः, तस्य पत्नी च अवलोकितवन्तौ यत् बालकयोः बालिकायाः च मुखसाम्यं वर्तते इति । तौ दम्पती त्रिषु अपि वात्सल्यातिशयं वहन्तौ तान् प्रीत्या पालितवन्तौ । 'मदनः, मोहनः, मोहिनी' इति च बालानां नाम कृतवन्तौ ।

एकदा ब्राह्मणः तीव्ररूपेण अस्वस्थः अभवत्, दिवङ्गतः च । किञ्चित्कालानन्तरं तस्य पत्नी अपि दिवङ्गता । ते त्रयः अपि इतोऽपि बाल्यावस्थायाम् एव आसन् । इतः परं स्वावलम्बिभिः भूत्वा स्वस्य भविष्यतः विषये चिन्तनीयम् इति ते अवगतवन्तः ।

एकदा अनिरीक्षितः अतिथिः राजा तेषां गृहम् आगतवान् । सः मार्गभ्रष्टः भूत्वा दूरे दृश्यमानं दीपम् अनुसरन् तेषां बालकानां गृहं प्राप्तवान् आसीत् । श्रान्तः सः तृषितः बुभुक्षितः च आसीत् । बालकाः तस्मै आहारं दत्वा रात्रौ शयनस्य व्यवस्थां कृतवन्तः ।

परेद्यवि प्रातः स्वस्य परिचयं वदन् राजा – ''भवन्तः यदाकदाचिदपि मत्तः साहाय्यं प्राप्तुम् अर्हन्ति'' इति उक्त्वा ततः गतवान् । राजधानीं प्रति गत्वा राजा तेभ्यः गोणीमितानि सुवर्णनाणकानि प्रेषितवान् । बालकानां कापि न्यूनता न स्यात् इति राज्ञः मतम् आसीत् ।

रात्रौ अतिथिरूपेण आगत्य स्थितः 'राजा' इति मोहिनी यदा ज्ञातवती तदारभ्य सा – ''अस्माभिः अपि प्रासादसदृशे भवने वासः करणीयः'' इति अग्रजौ उद्दिश्य सानुरोधं कथनम् आरब्धवती । तस्यां प्रीतिमन्तौ अग्रजौ अनुजायाः इच्छां पूरितवन्तौ । त्रयः अपि नूतने गृहे वासम् आरब्धवन्तः । मोहिनी सुन्दरीभिः कलाकृतिभिः गृहम् अलङ्कृतवती, गृहं परितः सुन्दरम् उद्यानं निर्मितवती च ।

एकदा कश्चित् योगी तेन मार्गेण आगतवान् । नद्याः तीरे अरण्ये विराजमानं सुन्दरं भवनं दृष्ट्वा सः आश्चर्यान्वितः अभवत् । मोहिनी तं योगिनं पृष्टवती – ''अस्माकं गृहे कापि न्यूनता दृश्यते किम् ?'' इति ।

तदा सः योगी – ''अत्र स्वर्णवृक्षः, स्वर्णचटकः, स्वर्णपञ्जरं, स्वर्णधनुः च यदि स्युः तर्हि सम्यक् अभविष्यत् । एतानि वस्तूनि पर्वतशिखरे विद्यमानात् प्रासादात् प्राप्तुं शक्यानि'' इति उक्तवान् ।

योगिना प्रासादं प्रति गमनाय मार्गः अपि निर्दिष्टः ।

योगिनः निर्गमनस्य अनन्तरं मोहिनी तस्याः सहोदरौ च सम्भूय चर्चां कृतवन्तः । अन्ते निर्णीतम् अभवत् यत् मदनः पर्वतस्थं प्रासादं





प्रति गच्छेत् इति । प्रस्थानात् पूर्वं मदनः मोहिन्यै एकं खड्गं दत्त्वा - ''यदि मम कापि हानिः सम्भविष्यति तर्हि एषः खड्गः निष्प्रभः भविष्यति'' इति उक्तवान् ।

दिनानि अतीतानि । कतिचन मासाः अपि अतीताः । खड्गः प्रकाशमानः एव आसीत् । एतेन मदनः सुरक्षितः अस्ति इति ज्ञातम् । किन्तु एकस्मिन् दिने स च खड्गः निष्प्रभः अभवत् ।

प्रवृत्तं तु एवम् - यदा मदनः प्रासादस्य सोपानानि अरोहन् आसीत् तदा - ''मदन ! अग्रिमं सोपानं न आरोहतु'' इति कश्चन ध्वनिः श्रुतः । मदनः योगिना उक्तानि जागरूकता-वचनानि स्मृतवान् । सोपानानाम् आरोहणसमये पृष्ठतः परिवर्त्य न द्रष्टव्यम् इति योगिना सूचितम् आसीत् । अतः सः तस्य ध्वनेः उपेक्षां कृतवान् । पुनः तेन यावत् सोपानद्वयम् आरूढं तावता - ''मदन, अहमपि भवता सह आगमिष्यामि'' इति ध्वनिः श्रुतः । सः चिन्तितवान् यत् पिता आह्वयन् अस्ति इति । अतः सः पृष्ठतः परिवर्त्य दृष्टवान् । अनुक्षणं सः शिलारूपेण परिणतः अभवत् ।

मोहनः अग्रजस्य अन्वेषणार्थं गन्तुम् उद्युक्तः । सः स्वस्य प्रियं वेणुम् अनुजायै दत्त्वा -''मम कापि हानिः यदि स्यात् तर्हि मम वेणुः द्विधा विभक्तः भविष्यति'' इति सूचितवान् ।

सः अपि पर्वतस्थं प्रासादं प्राप्तवान् । यदा सः सोपानद्वयम् आरूढवान् तदा अग्रजस्य ध्वनिं श्रुतवान् इव - ''मोहन, अहं भवतः पृष्ठतः अस्मि । प्रतीक्षां करोतु'' इति । मोहनस्य प्रमुखं लक्ष्यम् अग्रजस्य अन्वेषणम् एव आसीत् इत्यतः योगिना प्राप्तं सूचितानि वस्तूनि विस्मृत्य सः मुखं परिवर्त्य दृष्टवान् । सः अपि शिलात्वं प्राप्तवान् ।

वेणुः द्विधा विभक्तः यदा दृष्टः तदा मोहिनी दिङ्मूढा अभवत् । आदिनं सा रोदनं कृतवती । परेद्यवि कथञ्चित् धैर्यं प्राप्य सा निश्चितवती यत् मया अग्रजयोः मार्गे गन्तव्यम् इति ।

द्वौ युवकौ एतेन मार्गेण गतवन्तौ इति मार्गे तया ज्ञातम् । अन्ते सा प्रासादं प्रति गमनार्थं यानि सोपानानि आसन् तत्र प्राप्तवती । सर्वविधान् स्वरान्, जागरूकतावचनानि च अविगणयन्ती सा सोपानानि आरुह्य सभाभवनं प्राप्तवती । तत्रैव स्वर्णवृक्षः आसीत् । वृक्षे लम्बमाने स्वर्णपञ्जरे स्वर्णचटकः अपि आसीत् । सः चटकः - ''अहं भवत्याः आज्ञां प्रतीक्षमाणः अस्मि । तत्र दृश्यमानस्य

आनकस्य उपरि स्वर्णधनुः अस्ति । भवती धनुषा आनकं ताडयतु । शिलात्वं प्राप्तवन्तौ भवत्याः सहोदरौ आनकस्य ध्वनिना सचेतनौ भवतः'' इति उक्तवान् ।

चटकस्य कथनानुसारं मोहिनी आचरितवती । पुनः सा चटकम् उद्दिश्य– ''मम समीपे इदानीं स्वर्णधनुः, स्वर्णचटकः च अस्ति । अत्र मम अग्रजाभ्यां यम् अन्वेष्टुम् आगतं तं स्वर्णवृक्षम् अहं कथं प्राप्नुयाम् ?'' इति पृष्टवती ।

तदा चटकः – ''धनुषा स्पृश्यते चेत् स्वर्णवृक्षः हस्तगतः भविष्यति'' इति उक्तवान् ।

तावता तत्र आगतौ मदनमोहनौ – ''मोहिनि । भवती अत्र कथम् ?'' इति आश्चर्येण पृष्टवन्तौ ।

तदा मोहिनी – ''अहं सर्वम् अनन्तरं वदिष्यामि । इदानीं भवतोः कश्चित् धनुः स्वीकृत्य तेन स्वर्णवृक्षं स्पृशतु । सः वृक्षः हस्तगतः भविष्यति'' इति उक्तवती ।

ताभ्यां तथैव कृतम् । किञ्चित्कालानन्तरं ते सर्वे सोपानानि अवतीर्य प्रत्यागतवन्तः ।

केभ्यश्चित् दिनेभ्यः अनन्तरम् ते राज्ञे गृहम् आगन्तुं निमन्त्रणं प्रेषितवन्तः । राजा आगतवान् । ते तस्मै गृहम् उद्यानं च दर्शितवन्तः । यदा ते भोजनार्थम् उपविष्टवन्तः तदा राजा आश्चर्यचकितः अभवत् । यतः भोजनार्थं परिविष्टाः पदार्थाः मौक्तिकैः, वज्रैः, माणिक्यैः च निर्मिताः आसन् ।

''किमिदं विचित्रम् ?'' इति राजा आश्चर्येण पृष्टवान् ।

अनुक्षणं स्वर्णचटकः – ''महिला यदि शुनकाय, मार्जाराय, मृदः पाञ्चालिकायै च जन्म दातुम् अर्हति तर्हि स्वर्णवृक्षैः प्राप्तेभ्यः वज्रमौक्तिकादिभ्यः पाकः किं सज्जीकर्तुं न शक्यः ?'' इति अवदत् ।

राजा चटकस्य आशयम् अवगतवान् ।

सः चटकं दृष्ट्वा – ''एवं तर्हि मम पुत्राः कुत्र ?'' इति अपृच्छत् ।

तदा चटकः – ''भवतः पुरतः एव सन्ति ते । शुनकं मार्जारं पाञ्चालिकां च राज्ञ्यै तस्याः असूयापरे अग्रजे दत्तवत्यौ । गच्छतु । राज्ञीम् अन्विष्यतु'' इति आज्ञापूर्वकम् असूचयत् ।

राजा साक्षात् अरण्यं गत्वा राज्ञ्या मिलितवान् । राज्यतः बहिष्कारं प्राप्य सा अरण्ये वसति स्म । तौ द्वौ अपि पुत्राणां वासस्थलं प्राप्तवन्तौ । प्रवृत्तं सर्वं ज्ञात्वा तौ आश्चर्यचकितौ आस्ताम् ।



# पिशाच्योः उपायनम्

(तेलुगुकथायाः आधारेण रचिता
के. वंशीकृष्णः, तिरुपतिः)







काञ्चनः कत्यालग्रामवासी । सः परिश्रमेण कार्यं करोति स्म । तथापि कदापि दारिद्र्यात् मुक्तिः न आसीत् तस्य । कदाचित् तस्य पत्नी उक्तवती – ''भवान् नगरं गत्वा उद्योगान्वेषणं करोतु । तत्र भवन्ति उद्योगावकाशाः बहवः'' इति ।







पत्न्याः उपदेशम् अङ्गीकृत्य काञ्चनः नगरं प्रति प्रस्थितवान् । मध्याह्नपर्यन्तं सः प्रयाणं कृतवान् । श्रान्तः सः कस्यचित् वृक्षस्य अधः उपविष्टवान् विश्रान्त्यर्थम् । पत्न्या दत्तस्य पाथेयग्रन्थिम् उद्घाटितवान् सः । तत्र उभे रोटिके आस्ताम् । एका बृहत्, अपरा लघुः ।







'अहं बृहदाकाराम् आदौ खादामि । ततः लघ्वाकाराम्' इति स्वगतम् अवदत् सः । तत् तस्मिन् वृक्षे वसन्तीभ्यां पिशाचीभ्यां श्रुतम् । 'एषः आवां खादिष्यति' इति चिन्तयन्त्यौ ते भीते । ते वृक्षात् अधः आगत्य काञ्चनस्य पुरतः स्थितवत्यौ ।





''कृपया आवां न खादतु'' इति ते काञ्चनं प्रार्थितवत्यौ । काञ्चनः बुद्धिमान् । पिशाच्यः कथं व्यवहरन्ति इति सः जानाति स्म । ''भवत्यौ मुञ्चामि चेत् मया किं प्राप्येत ?'' इति पृष्टवान् सः । ''आवां वरं दास्यावः'' इति अवदत् ज्येष्ठा पिशाची ।







''एतां पेटिकां स्वीकरोतु । एतां त्रिवारं ताडयित्वा यदि धनं प्राथ्यते तर्हि एषा पेटिका धनं दास्यति'' इति अवदत् सा । तां पेटिकां स्वीकृत्य काञ्चनः प्रयाणम् अनुवर्तितवान् । नगरप्राप्तितः पूर्वम् एव सायङ्कालः जातः ।







तेन एकं गृहं दृष्टम् । तत्र एका वृद्धा आसीत् । वासाय स्थलदानम् अङ्गीकृतवत्यै तस्यै काञ्चनः पेटिकां दत्त्वा - ''त्रिवारं ताडनेन एषा धनं ददाति । जागरूकतया रक्षणीया एषा'' इति अवदत् । वृद्धा तां स्वीकृत्य अन्येद्युः प्रातः त्रिवारं ताडयित्वा धनं प्राप्तवती । अतः सा तत्सदृशीम् अपरां पेटिकां तस्मै दत्तवती ।



काञ्चनः नगरगमनविचारं परित्यज्य गृहं प्रत्यागत्य पेटिकां त्रिवारं ताडितवान् । किन्तु पेटिकातः धनं न पतितम् । सः पुनः पिशाच्योः समीपं गत्वा प्रवृत्तम् उक्तवान् । ते एकं पात्रं दत्तवत्यौ । ''सूर्यप्रकाशे स्थापयित्वा आहारः प्रार्थितः चेत् एतत् पात्रम् अन्नं ददाति'' इति उक्तवत्यौ च ।



काञ्चनः पुनरपि तस्याः वृद्धायाः गृहं गत्वा पात्रं तस्यै दत्त्वा अवदत् यत् एतत् सूर्यप्रकाशे स्थापयित्वा प्रार्थितं चेत् आहारः प्राप्यते, अतः सूर्यतापे न स्थापनीयम् एतत् इति । सः तां परीक्षमाणः आसीत् । वृद्धा पात्रस्य माहात्म्यम् अवगतवती ।



अनन्तरदिने सा तत्सदृशम् एव अपरं पात्रं तस्मै दत्तवती । गृहम् आगत्य परीक्ष्य जातां वञ्चनाम् अवगतवान् काञ्चनः । सः पिशाच्यौ प्रवृत्तम् उक्तवान् । ते एकं दण्डं तस्मै दत्त्वा उक्तवत्यौ – ''एतेन त्रिवारं भूमिः ताडिता चेत् एषः दण्डः तथा कृतवन्तम् एव ताडयति'' इति ।




काञ्चनः तृतीयवारं वृद्धायाः गृहं गतवान् । सः तं दण्डं वृद्धायै दत्त्वा अवदत् यत् एतेन त्रिवारं भूमिः न ताडनीया इति । ततः सः निलीय स्थित्वा अग्रे किं प्रवर्तते इति पश्यन् स्थितवान् ।





वृद्धा कुतूहलम् असहमाना दण्डेन त्रिवारं भूमिं ताडितवती । तदा दण्डः तस्याः प्रहारम् आरब्धवान् । तस्याः आक्रन्दनं श्रुत्वा तस्याः समीपम् आगत्य काञ्चनः अवदत् – ''भवती मां वञ्चितवती खलु ? पूर्वं स्वीकृता पेटिका पात्रं च प्रत्यर्प्यते चेदेव एषः दण्डः प्रहारं स्थगयिष्यति, न अन्यथा'' इति ।





अनन्यगतिका वृद्धा पेटिकां पात्रं च प्रत्यर्पितवती । काञ्चनः पिशाचीभ्यां दत्तं त्रिविधम् अपि उपायनं स्वीकृत्य गृहम् आगतवान् । पेटिकातः तेन प्रभूतं धनं प्राप्तम् । पात्रं च अपेक्षितम् आहारं ददाति स्म । दण्डः तान् अपायात् रक्षति स्म । एवं सः पत्नीपुत्राभ्यां सह सुखेन जीवितवान् ।

# भारतम् अवगम्यताम्

१. देहल्यां स्थितं रक्तदुर्गं शाहजहानेन निर्मापितम् । आग्रास्थं रक्तदुर्गं केन निर्मापितम् ?

२. तौ सिक्खगुरू कौ, ययोश्च नाम अमृतसरस्थेन सुवर्णमन्दिरेण सम्बद्धम् अस्ति ?

३. भारतस्थम् अतिमहत् यवनमन्दिरं किम् ? तत् कुत्र अस्ति ? तत् केन निर्मापितम् ?

४. राष्ट्रपतिभवनं (यच्च पूर्वं वैस्राय्भवनम् इति निर्दिश्यते स्म) यस्य पर्वतस्य उपरि निर्मितं तस्य पर्वतस्य नाम किम् ?

५. कश्चन मोगलराजः पत्न्याः निमित्तम् एकं स्मारकं निर्मितवान् । एवमेव काचित् मोगलराज्ञी स्वस्य पत्युः निमित्तं स्मारकं निर्मापितवती । तत् स्मारकद्वयं किम् ? तयोः राजराज्ञयोः नाम किम् ?

७. हैदराबादनगरे स्थितस्य प्रसिद्धस्य चार्मिनार्भवनस्य कश्चन विशिष्टः इतिहासः अस्ति । स च साङ्क्रामिकसम्बद्धः अस्ति । स च कः ?

८. मुम्बयीस्थं 'गेट् वे आफ् इण्डिया', नवदेहलीस्थम् 'इण्डिया गेट्' च स्मारकत्वेन निर्मिते । कया घटनया सम्बद्धे ते ?

९. महाराष्ट्रे स्थितं किञ्चन विशालं भवनम् आंग्लेयैः राजनैतिकनेतॄणां कारागारत्वेन उपयुक्तम् आसीत् । तस्य भवनस्य नाम किम् ? कश्चन प्रमुखः नायकः तत्र मरणं प्राप्तवान् । सः कः ?

१०. अजन्तास्थानाम् एल्लोरास्थानां च गुहानां वैशिष्ट्यं किम् ?

*(उत्तराणि अग्रिमे मासे)*



६. चित्रे यत् दृश्यते तत् भारतस्थं महत् प्रवेशद्वारम् (गेट् वे) । कुत्र अस्ति एतत् ? केन वा निर्मापितम् एतत् ?

### 'डिसेम्बर्'मासस्य प्रश्नानाम् उत्तराणि

१. एम्.सि. मेहता ।
२. रूर्केला ।
३. होय्सलवंशस्य ।
४. कार्त्तिकेयस्य । (सुब्रह्मण्यः इति नामान्तरम्)
५. मुक्लिस्पुर् ।
६. चोमो ।
७. लवङ्गम् ।
८. ग्रन्थलिपिः ।
९. गुरुबचनसिङ्ग् रन्धवा ।
१०. सि. राजगोपालाचार्यः ।



# विष्णुपुराणम्

क्षीरसागरे स्थितस्य त्रिकूटपर्वतस्य त्रीणि शिखराणि आसन् - लोहमयं, रजतमयं, सुवर्णमयं चेति । तेषां मध्ये किञ्चन घनारण्यम् आसीत् । विशालं तत् अरण्यं फलपुष्पमयैः वृक्षैः पूर्णम् आसीत् । तस्मिन् अरण्ये निवसति स्म गजेन्द्रः नाम गजः । कदाचित् सः असंख्याभिः पत्नीभिः सह पिपासानिवारणाय कञ्चित् सरोवरं गतवान् ।

पिपासानिवारणस्य अनन्तरं जलक्रीडा करणीया इति गजेन्द्रस्य मनसि इच्छा जाता । अतः सः पत्नीभिः सह सरोवरं प्रविश्य जलम् उत्क्षिपन् मनोरञ्जनं प्राप्नुवन् आसीत् । अत्रान्तरे कश्चन महान् मकरः आगत्य गजेन्द्रस्य वामपादं स्वस्य दंष्ट्रैः दृढतया गृहीतवान् ।

एतस्मात् महतीं पीडां प्राप्नुवन् गजेन्द्रः उच्चैः घीङ्कृतवान् । तस्य अपायं दृष्ट्वा भीताः तस्य पत्न्यः तीरं गत्वा अश्रूणि स्रावितवत्यः । मकरस्य ग्रहणात् गजेन्द्रस्य मुक्तिः कथं सम्पादनीया इति ताः न ज्ञातवत्यः ।

गजेन्द्रः दुष्टस्य मकरस्य ग्रहणात् आत्मनः मोचनाय बहुधा प्रयत्नं कृतवान् । सः तीक्ष्णैः दन्तैः तं पुनः पुनः पीडितवान् । तस्मात् क्रुद्धः मकरः स्वस्य ग्रहणं दृढीकृतवान् । तस्मात् रक्तधारा निर्गता ।

गजेन्द्रः स्वस्य शुण्डया मकरं ताडयति स्म । तदा मकरः स्वस्य पुच्छेन प्रतिताडनं करोति स्म । गजः अन्येन पादेन मकरं विमर्दयितुं यदा प्रयासं करोति तदा मकरः शरीरं जले मज्जयित्वा आत्मनः रक्षणं करोति स्म । यदा गजेन्द्रः तीरं प्रति गमनाय प्रयासं करोति तदा मकरः पुनरपि तस्य पादं दंष्ट्रैः दृढतया गृहीत्वा जलस्य अन्तः आकर्षति स्म ।



एवं मकरगजेन्द्रयोः युद्धं निरन्तरं प्रचलति स्म ।

गजेन्द्रः स्वशक्तौ विश्वसन् युद्धं कुर्वन् आसीत् । तथापि गच्छता कालेन तदीया शक्तिः क्षीणा जाता । मकरस्तु जलवासी । जले सहजतया तस्य शक्तिः अधिका । युद्धकाले तु सा क्षणे क्षणे प्रवर्धते स्म । किन्तु गजस्य आहारः कोऽपि नास्ति । शरीरात् रक्तं निरन्तरं प्रवहति अपि । अतः सः नितरां शक्तिहीनः जातः । आत्मनः रक्षणाय मार्गम् अपश्यन् सः किङ्कर्तव्यतामूढतां गतः आसीत् ।

दुःखितः गजेन्द्रः अचिन्तयत् - 'वस्तुतः पिपासायाः निवारणार्थं मया अत्र आगतम् । पिपासायाः निवारणस्य अनन्तरं मया इतः निर्गन्तव्यम् आसीत् । किन्तु मयि जलक्रीडेच्छा उत्पन्ना । तस्मात् एषः अपायः सम्प्राप्तः । इदानीं मम रक्षकः को वा स्यात् ? यद्यपि अहम् असहायः जातः अस्मि, तथापि मनसि भावना भवति यत् मां कोऽपि रक्षिष्यति एव इति । सः कः इति तु न ज्ञायते । मम आशाबन्धस्य कोऽपि आधारः स्यादेव । इदानीं भगवान् एव मम रक्षकः' इति ।

सः प्रार्थितवान् - ''देवः, भगवान्, ईश्वरः इत्यादिभिः शब्दैः निर्दिश्यमान हे प्रभो ! सर्वेषां कारणं भवान् एव । अपायनिवारकः अपि ऋते भवत्तः नास्ति अन्यः । यावत् अपायः न प्राप्यते तावत् मादृशाः मदमत्ताः भवन्तं न स्मरन्ति । दुःखम् एव न प्राप्तं चेत् भवतः आवश्यकतायाः अनुभवः एव न भवति । भवान् अस्ति उत न इति येषां मनसि सन्देहः तान् कटाक्षेणापि न पश्यति भवान् । किन्तु ये भक्त्या भवन्तं प्रार्थयन्ते तेषां रक्षणं कथमपि क्रियते एव भवता'' इति ।

एतादृशात् चिन्तनात् गजेन्द्रेण अनुभूतं यत् मकरस्य पीडा किञ्चित् न्यूना जायमाना अस्ति इति ।

गजेन्द्रः यदा भगवतः ध्यानं करोति स्म तदा मकरेण दंष्ट्रासु पीडा अनुभूता । तस्य शरीरं कम्पमानं जातम् । तथापि सः स्वस्य रोषम् अपरित्यजन् गजेन्द्रस्य पादं दंष्ट्राभिः पुनः पुनः अपीडयत् ।

'प्राणिनां कष्टस्य पीडायाः च अपहर्ता भवान् एव । सर्वत्र व्याप्तः भवान् । भवद्विरहितं स्थलं कुत्र वा स्यात् लोके ? एतस्याः सृष्टेः मूलं भवान् एव । स्वस्य रक्षणाय अहं यावत् तीव्रतया प्रार्थनां करिष्यामि तावच्छीघ्रं भवान् आगमिष्यति इत्यत्र मम

विश्वासः अस्ति । कामरूपी भवान् मनसि वाण्यां चापि निवसति । अनाथानां रक्षणं भवतः कर्त्तव्यम् एव खलु ? मयि स्थिताः प्राणशक्तयः निर्गमनाय उद्युक्ताः सन्ति । अश्रूणि शुष्काणि जातानि सन्ति । उच्चस्वरेण अहं भवन्तम् आह्वातुम् अपि न शक्नोमि । यदि इच्छति तर्हि मां रक्षतु । अन्यथा मां परित्यजतु । सर्वं भवदधीनम् अस्ति । मयि तु भवतः ध्यानात् ऋते अन्यत् किमपि नास्ति । मम रक्षकः भवतः ऋते अन्यः नास्ति' इत्येवं वदन् गजेन्द्रः स्वस्य समग्रां शक्तिं सङ्गृह्य शुण्डाम् उन्नीय उपरि दृष्टवान् ।



स्वस्य शक्तिः नश्यन्ती अस्ति इति अनुभवः प्राप्तः मकरेण । तस्य मुखम् उद्घाटितं भवत् आसीत् । कण्ठः अवरुद्धः जायमानः आसीत् ।

गजेन्द्रः तु नेत्रे निमील्य आत्मानम् एव विस्मृत्य निश्चलतया स्थितवान् आसीत् । प्रतिमावत् अचलः जातः आसीत् सः ।

अत्रान्तरे भगवान् विष्णुः तत्र आगतः । समग्रः आकाशः तेन व्याप्तः आसीत् । आत्मानं लघुकणसदृशं भावितवान् गजेन्द्रः ।

विष्णुना स्वस्य चक्रं प्रयुक्तम्, अभय-मुद्रया हस्तः उन्नीतः च । वेगेन गच्छत् चक्रं क्षणाभ्यन्तरे मकरसमीपं गत्वा तदीयस्य कण्ठस्य छेदनम् अकरोत् ।

वस्तुतः सः मकरः गन्धर्वः आसीत् । तस्य नाम आसीत् 'हूहूः' इति । देवलः नाम ऋषिः यदा जले स्थित्वा तपसि लीनः आसीत् तदा हूहूः मकरः इव जलस्य अन्तः एव सञ्चरन् आगत्य तदीयं पादं गृहीतवान् आसीत् । तस्मात् क्रुद्धः मुनिः शापं दत्तवान् आसीत् यत् भवान् मकरजन्म प्राप्य इतःपरं जले एव निवसतु इति । विष्णुचक्रस्पर्शात् सः शापविमुक्तः जातः ।

विष्णुः मकरस्य ग्रहणात् मुक्तिं प्राप्तवन्तं गजेन्द्रं सरोवरात् बहिः आकृष्टवान् । ततः सः तदीयं कुम्भस्थलं हस्तेन स्पृष्टवान् । एतस्मात् स्पर्शात् गजेन्द्रः नष्टां शक्तिं पुनः प्राप्तवान् । तेनैव सह पूर्वजन्मनः स्मृतिः अपि प्राप्ता तेन ।

गजेन्द्रः पूर्वस्मिन् जन्मनि इन्द्रद्युम्नः नाम विष्णुभक्तः राजा आसीत् । विष्णोः ध्याने लीनः सः कदाचित् महर्षेः अगस्त्यस्य आगमनं न लक्षितवान् । तस्मात् अगस्त्यः शापं दत्तवान् यत् अग्रिमे जन्मनि भवान् मत्तः गजः भविष्यति इति । तस्मिन् एव दिने राजा गजेन्द्ररूपं प्राप्तवान् ।



गजेन्द्रमोक्षसम्बद्धाम् एतां कथां श्रुत्वा नैमिषारण्यं यागार्थम् आगताः शौनकादयः महर्षिं सूतम् उक्तवन्तः - ''मुनिवर्य ! गजेन्द्रमोक्षकथा एकस्य गजस्यैव न, अपि तु समस्तस्य प्राणिजगतः इति वयं भावयामः । तत्रापि मानवाः अनेकैः कष्टैः ग्रस्ताः सन्तः ताम्यन्तः भवन्ति सदापि । तत्सम्बन्धिनी कथा अपि अस्ति एषा'' इति ।

तदा सूतमहर्षिः उक्तवान् - ''आम् । गजेन्द्रमोक्षकथा श्लेषार्थयुक्ता अस्ति । यः कथाम् इच्छति सः तथा अर्थं विवरीतुं शक्नोति । कालः विष्णोः अधीनः । कालचक्रस्य परिभ्रमणतः बह्वीनां समस्यानां काठिन्यानां च परिहारः भवितुम् अर्हति'' इति ।

मुनयः उक्तवन्तः - 'मुनिवर्य ! गजेन्द्रमोक्षस्य आधारेण अस्माभिः ज्ञायते यत् सर्वेषां कार्याणां कारणीभूतः अस्ति सर्वेश्वरः विष्णुः इति । एतस्य विष्णोः कथा पुर्णरूपेण श्रोतव्या इति अस्ति अस्माकम् इच्छा । भवतः पुरतः वयं बालाः इव परिगणिताः स्याम । अस्माकं प्रार्थना अस्ति यत् यथा वयं जानीयाम तथा सरलया शैल्या विष्णोः समस्ता कथा श्रावणीया इति । भवान् महर्षेः व्यासस्य मुखात् पुराणेतिहासादीनां मर्म अवगतवान् अस्ति । अतः भवान् एव ताः कथाः उक्त्वा अस्मान् कृतार्थान् कर्तुम् अर्हति'' इति ।

मुनीनां प्रार्थनां श्रुत्वा सूतमहर्षिः सन्तुष्टः सन् अवदत् - ''भवतु, ताः कथाः श्रावयिष्यामि ।

व्यासमहर्षिः विष्णुसम्बद्धानाम् अवताराणां विशेषान् भागवतग्रन्थे निरूप्य तान् विशेषान् स्वस्य पुत्रं शुकं श्रावितवान् आसीत् । भवसागरतरणेच्छया युक्ताय महाराजाय परीक्षिते शुकमहर्षिः विष्णुपुराणं श्रावितवान् । गजेन्द्रमोक्षाय प्रकटीभूतस्य विष्णोः अवतारः 'मूलावतारः' इति उच्यते । भगवता विष्णुना बहवः अवताराः कृताः भूलोके । तेषु विकासक्रमम् अनुलक्ष्य दशावताराः प्रामुख्येन परिगणिताः ।

नारः नाम नीरं जलं वा । विष्णुः जलस्य मूलम् । अतः सः 'नारायणः' इति ख्यातः । जलात् एव प्राणिनाम् उद्भवः आरब्धः । विष्णुः जलचरत्वं प्राप्य मत्स्यरूपेण जन्म प्राप्तवान् । दशावतारेषु एषः मत्स्यावतारः एव आदिमः ।

विष्णुः जलेन युक्तेन नीलेन मेघेन सदृशः भवति । मेघस्य अन्तः यथा विद्युत् निहिता

भवति तथा विष्णोः अन्तः भवति तेजः । विष्णोः अन्तः स्थितं जलतत्त्वं तेजसा युक्तं सत् श्वेतच्छायायुक्ततया प्रकाशते । सः जलराशिः एव उच्यते क्षीरसागरः इति ।

क्षीरसागरे अनन्तः कालः शेषनागरूपेण आत्मानं वलयीकृत्य शयितवान् भवति । शेषनागस्य सहस्रं फणाः भवन्ति । अन्त-रहितस्य शेषनागस्य उपरि शेषशायिरूपेण भगवान् विष्णुः आसीनः भवति । एवं यदा विष्णुः शयितवान् आसीत् तदा कदाचित् तस्य नाभितः दीर्घनालोपेतं किञ्चन कमलम् उत्पन्नम् । तस्मिन् पद्मे ब्रह्मणः उत्पत्तिः जाता । सः ब्रह्मा एव सर्वान् प्राणिनः सृष्टवान् । अनन्तः कालः युगरूपेण निरन्तरम् अनुवर्तते । तानि च युगानि – कृतः, त्रेता, द्वापरः, कलिः चेति । एतेषां चतुर्णां युगानां समूहः उच्यते महायुगम् इति ।

महायुगानां सहस्रम् उच्यते कल्पः इति । एकः कल्पः ब्रह्मणः दिवा भवति । दिवा-कालस्य समाप्तेः अनन्तरं सः निद्रायां लीनः भवति । सः कालः उच्यते 'कल्पान्तः' इति । कल्पान्ते सर्वासु दिक्षु घोरः अन्धकारः प्रसृतः भवति । विष्णुतः निर्गतः सङ्कर्षणाग्निः सर्वं दग्धं करिष्यति । झञ्झावाताः तस्मिन् काले वान्ति । मेघाश्च मुसलधारया वर्षणं कुर्वन्ति । महासमुद्रे आकाशस्पृशः तरङ्गाः उत्पद्यन्ते । भूलोकः, भुवर्लोकः, स्वर्लोकः च जले निमग्नाः भवन्ति । जलात् ऋते अन्यत् किमपि न दृश्यते कुत्रापि । एवं प्रलयकालः भविष्यति । प्रलयकालः ब्रह्मणः निद्रानुकूलः



रात्रिकालः ।

तादृशः कल्पान्तकालः कश्चन । सत्यव्रतः नाम राजर्षिः नद्यां स्नात्वा नारायणं ध्यात्वा यदा अर्घ्यं दातुं हस्तेन जलं गृहीतवान् तदा तस्मिन् जले सुवर्णवर्णीयः कश्चन मत्स्यः दृष्टः । सत्यव्रतः यावत् तं समुद्रे परित्यक्तुम् उद्युक्तः तावता सः मत्स्यः अवदत् – "राजन् ! अस्माकं मत्स्यजातिः न उत्तमा । लघुमत्स्यं खादति शक्तिमान् महामत्स्यः । यदि महामत्स्येभ्यः आत्मरक्षणं क्रियेत तर्हि अपायः अपगतः इति न । धीवराः जालं प्रसार्य अस्मान् गृहीत्वा मारयन्ति । अतः भवन्तं शरणं गच्छन् अहं भवतः अञ्जलौ आगतः । भवान् निर्दयतां हृदये वहन् मां मा त्यजतु इति प्रार्थना मम" इति ।

सत्यव्रतः तं मत्स्यं कमण्डलौ स्थापयित्वा स्वनगरं नीतवान् । सत्यव्रतः राजा सन् शासनं कुर्वन् अपि तपस्यया ऋषित्वं प्राप्तवान् आसीत् । विष्णोः परमभक्तः सः महाज्ञानी अपि ।

कमण्डलौ स्थितः मत्स्यः दिनाभ्यन्तरे एव प्रवृद्धः सन् कमण्डलौ स्थातुं पर्याप्ततया स्थलम् अप्राप्नुवन् आर्तस्वरेण अवदत् – "महाराज ! अत्र मम स्थित्यर्थं स्थलम् अपर्याप्तम् । कृपया मां कमण्डलुतः बहिः स्थापयतु" इति ।

एतत् अङ्गीकुर्वन् राजा तं कस्मिंश्चित् कासारे स्थापितवान् । अल्पे एव काले तत्रापि स्थलस्य अपर्याप्तता अनुभूता मत्स्येन । राजा तं सरोवरे स्थापितवान् । तत्रापि स्थलस्य अपर्याप्तता यदा जाता तदा राजा तं महानद्यां, ततः समुद्रे च स्थापितवान् । तदा मत्स्यः तं पुनः अवदत् – "राजन् ! अहम् अस्मि शरणागतः । भवत्तः मम रक्षणम् इच्छामि अहम् । किं भवान् मां समुद्रे परित्यज्य गन्तुम् इच्छति ? अत्रत्याः मकराः तिमिङ्गिलाः च किं मां न पीडयेयुः ? अत्र मम त्यागः किम् उचितः ?" इति ।

तदा सत्यव्रतः अवदत् – "अये, महामीन ! मया इतोऽपि किं करणीयम् अस्ति इति भवान् एव वदतु । क्षणाभ्यन्तरे शतयोजनाकारेण वर्धमानं भवन्तं को वा प्राणी पीडयितुं समर्थः भवेत् ? भवतः पीडनं सर्वथा असम्भवम्" इति ।





# नाणकदानपुण्यम्

कस्मिंश्चित् ग्रामे प्रभुगुप्तनामकः कश्चन वणिक् आसीत् । सः धनमेव जीवितं मन्यते स्म । तस्य एषा कृपणता पत्न्यै मीनाक्ष्यै न रोचते स्म । सा पुण्यकार्याय अनुरोधपूर्वकं धनव्ययं कारयति स्म पत्युः द्वारा ।

प्रभुगुप्तः महाधनिकः । किन्तु सन्तानहीनः सः । तस्मात् कारणात् सः सदा दुःखितः भवति स्म । सन्ततिं प्राप्तुं तस्य पत्नी मीनाक्षी अनेकविधानि पुण्ककार्याणि, पूजादिकं च कृतवती । किन्तु सर्वं निष्फलं जातम् ।

अनेन श्रान्ता मीनाक्षी एकदा सङ्कल्पम् अकरोत् यत् यदि मम सन्ततिः भविष्यति तर्हि देहे स्थितानि सर्वाणि आभरणानि देवाय अर्पयिष्यामि, तेनैव सह पत्युः वाणिज्ये वर्षस्य लाभः यः भवति तस्य शतांशं देवालयस्य धनपेटिकायां स्थापयिष्यामि इति ।

एतस्य सङ्कल्पस्य फलमिव मीनाक्षी गर्भवती सञ्जाता । नवमासानन्तरं सा पुत्रं प्रसूतवती अपि । ततः सा आत्मना कृतं सङ्कल्पं पतिम् उक्त्वा तस्य पूरणाय अनुरोधं कृतवती ।

प्रभुगुप्तः तस्याः सङ्कल्पविषयं श्रुत्वा आश्चर्यचकितः सन् अवदत् - ''भवत्याः बुद्धिः किं नष्टा ? देहे स्थितानाम् आभरणानां मूल्यं न्यूनातिन्यूनं द्वित्रसहस्ररूप्यकात्मकं भवेत् । लाभस्य शतांशः कियत् स्यात् इति भवती जानाति किम् ? एतादृशं विषयम् इतः परं मम पुरतः मा वदतु'' इति ।

मीनाक्षी पत्युः वचनात् क्रुद्धा सती - ''एतादृशे विषये कदापि 'न' इति न वक्तव्यम् । एषः भगवता सम्बद्धः विषयः । यदि पुत्रस्य किमपि जायेत तर्हि मम मरणं निश्चितम् । अतः एतस्मिन् विषये जागरूकता भवतु'' इति उक्तवती ।

इदानीं प्रभुगुप्तः निरुपायः सन् पत्न्याः वचनं पालयितुं सिद्धः अभवत् ।

ततः कानिचन दिनानि गतानि । एकदा प्रभुगुप्तः पत्नीपुत्राभ्यां सह सङ्कल्पं पूरयितुं देवालयं गतः । मीनाक्षी सङ्कल्पानुगुणं देवाय अर्पयितुम् आभरणानि धृतवती । प्रभुगुप्तः निश्चितवान् आसीत् यत् स्वस्य वाणिज्यात् प्राप्तस्य लाभस्य शतांशः नाम सहस्रं रूप्यकाणि इति ।



'भगवते यत् दातव्यं तद्विषये वञ्चना मास्तु' इति मीनाक्षी प्रस्थानात् पूर्वमेव पतिं स्मारितवती । ततः मार्गव्ययार्थं सहस्त्रं रूप्यकाणि स्वीकृत्य प्रस्थितवान् प्रभुगुप्तः । यदा बहिः आगत्य द्वारं कीलयितुम् उद्युक्तं तदा गृहस्य पुरतः उपविष्टं कञ्चन संन्यासिनं दृष्टवान् सः ।

सः संन्यासी प्रभुगुप्तम् अवदत् - ''भोः, पुण्यतीर्थदर्शनार्थं गमनसमये दानादिकं खलु करणीयम् ? गतरात्रितः मया किमपि न भुक्तम् । खाद्यं किमपि दीयताम्'' इति ।

''अये ! अलम् उपदेशेन । भवते अन्नस्य दानात् यत् अल्पं पुण्यं प्राप्येत तत् मह्यं न आवश्यकम् । अहं सहस्त्रस्य रूप्यकाणां दानं कृत्वा महत् एव पुण्यं सम्पादयितुं प्रस्थितः अस्मि'' इति उक्तवान् प्रभुगुप्तः ।

प्रभुगुप्तस्य वचनेन पत्नी मीनाक्षी नितराम् असन्तुष्टा । सा स्यूततः लड्डुकद्वयं निष्कास्य पतिः यथा न पश्येत् तथा तस्मै संन्यासिने दत्तवती । अपि च स्वसमीपे स्थितानि द्वित्राणि नाणकानि अपि तस्मै दत्तवती सा ।

मीनाक्ष्या यदा संन्यासिने धनं दत्तं तदा प्रभुगुप्तः दूरात् तत् दृष्टवान् एव । सः पत्नीं तर्जितवान् - ''अहो, भवती सर्वं धनं गमनात् पूर्वमेव व्ययीकरोति चेत् आगमनानन्तरं भिक्षा याच्यते किम् ?'' इति ।

पुण्यतीर्थं गत्वा देवालयगमनात् पूर्वं प्रभुगुप्तः मीनाक्ष्याः हस्ते सहस्त्रं रूप्यकाणि ददत् उक्तवान् - ''मम समीपे पुनः सहस्त्रं रूप्यकाणि सन्ति । सहस्त्रं रूप्यकाणि देवालये पेटिकायां अर्पयाम । अन्यदेकं सहस्त्रं मार्गव्ययाय भवतु'' इति ।

भगवतः दर्शनसमये मीनाक्षी स्वस्य आभरणैः सह पत्या दत्तानि सहस्त्रं रूप्यकाणि अपि देवाय अर्पितवती । प्रभुगुप्तः अपि पत्न्या कृतम् अपश्यन् सहस्त्रं रूप्यकाणि देवाय अर्पितवान् ।

उभौ अपि देवालयात् बहिः आगतौ । तदा प्रभुगुप्तः - ''रूप्यकाणि जागरूकतया रक्षतु । अत्र सर्वत्रापि चोराः सन्ति'' इति मीनाक्षीम् उक्तवान् ।

''रूप्यकाणि भवतः समीपे सन्ति खलु । मम समीपे स्थितं मया देवाय अर्पितम्'' इति मीनाक्ष्या उक्तम् ।

तदा झटिति प्रभुगुप्तेन ज्ञातं यत् प्रमादः जातः इति । 'देवाय अर्पणीयम्' इत्येतावदेव ताभ्यां चर्चितम् आसीत् । किन्तु केन अर्पणीयम् इति न निर्णीतम् आसीत् । तस्मात्

उभाभ्याम् अपि अर्पितम् आसीत् ।

पतिं पश्यन्ती मीनाक्षी पृष्टवती - ''भगवते यत् धनम् अर्पणीयम् आसीत् तद्विषये कापि वञ्चना तु न कृता किल भवता ?'' इति ।

प्रभुगुप्तः लज्जया शिरः नमितवान् । ततः उभयोः समीपे यत् किञ्चित् धनम् आसीत् तस्य उपयोगेन एव ताभ्यां प्रतिप्रयाणं करणीयम् अभवत् । यावत् आसीत् तत् एकस्य प्रयाणार्थम् अपि अपर्याप्तम् आसीत् । अतः प्रत्यागमनसमये उपवासेन याचनेन च बहुधा क्लेशान् अनुभूय तौ गृहं प्रत्यागतवन्तौ ।

बहूनां दिनानाम् अनन्तरम् आगतं प्रभुगुप्तं द्रष्टुं ग्रामीणाः केचन तस्य गृहम् आगताः । आश्चर्यस्य विषयः नाम प्रभुगुप्तस्य प्रस्थान-समये यः संन्यासी आगतः आसीत् सः इदानीमपि तत्रैव आसीत् ।

संन्यासी प्रभुगुप्तं दृष्ट्वा - ''भवतां तीर्थयात्रा सुसम्पन्ना किल ?'' इति पृष्टवान् ।

प्रभुगुप्तः असहनया - ''आम् । सर्वं सुसम्पन्नम् । मार्गे याचनां कुर्वन्तौ आवां प्रत्यागतौ'' इति उक्तवान् ।

''एतं विषयं भवान् गमनसमये एव उक्तवान् किल ? अस्तु, मया गम्यते'' इति कथयन् संन्यासी ततः प्रस्थितः ।

तदा काचन महिला खेदेन उक्तवती - ''आत्मना यत् अधिकम् औदार्यं दर्शितं तस्य निमित्तं योग्यः पुरस्कारः लब्धः तेन'' इति ।

तस्याः वचनं श्रुत्वा - ''कः अभिप्रायः भवत्याः ?'' इति ताम् आश्चर्येण पृष्टवान् प्रभुगुप्तः ।

''श्रूयताम् । यदा भवन्तः इतः प्रस्थिताः तदारभ्य एषः संन्यासी शुनकवत् भवतां गृहं रक्षितवान् । परह्यः यदा भवतां गृहं चोराः आगताः तदा एषः उच्चैः आक्रोशन् सर्वान् समावेशितवान् । अन्यथा भवतां सर्वा अपि सम्पत्तिः नष्टा अभविष्यत् । किन्तु तादृशं चोरम् इव भावितवान् भवान्'' इति सा महिला प्रभुगुप्तं निन्दितवती ।

''नाणकदानपुण्यात् एव अस्माकं रक्षणम् अभवत्'' इति मीनाक्षी पतिं पश्यन्ती उक्तवती ।

प्रभुगुप्तः स्वस्य मूर्खतां निन्दन् पश्चात्तापं प्राकटयत् । ततः प्रभृति सः सर्वेभ्यः दानं ददत् 'महादाता' इति ख्यातिं लब्धवान् ।





# साधोः सत्कारः

राजारामः चिन्तामणिग्रामे निवसति । तस्य पिता रघुवीरः । सः भूपतिनामकस्य धनिकस्य गृहे कर्मकरः आसीत् । पिता रघुवीरः राजारामं विद्यावन्तं कर्तुम् ऐच्छत् । पुत्रः बाल्ये एव मातृविहीनः जातः इति कारणतः तस्य विषये पितुः रघुवीरस्य महती प्रीतिः । राजारामोऽपि पठने विशेषासक्तिं प्रदर्शितवान् ।

किन्तु धनिकस्य भूपतेः पत्नी भानुमती राजारामस्य पाठशालागमनं न ऐच्छत् । यतः तस्याः मनसि भयम् आसीत् – राजारामः विद्यावान् यदि भवेत् तर्हि सः स्वपितुः मरणस्य अनन्तरं मम गृहस्य कर्मकरत्वं न अङ्गीकुर्यात् इति । अतः सा रघुवीरम् आहूय उक्तवती – ''भवतः पुत्रः इदानीं दशवर्षीयः । अस्माकं गृहे कार्यं कर्तुं सः समर्थः अस्ति । अतः इतः परं भवान् अस्माकम् उद्यानकार्यं करोतु । उद्याने स्थिते गृहे एव भवतोः वासः भवतु'' इति ।

तदा रघुवीरः – ''अम्ब ! अहं मम पुत्रं विद्यावन्तं कर्तुम् इच्छामि'' इति सविनयम् उक्तवान् ।

एतत् श्रुत्वा भानुमती उच्चस्वरेण – ''कीदृशः स्वप्नः भवतः ! पठनेन भोजनं वस्त्रादिकं च लभ्यते किम् ? मम वचनं शृणोतु । भवत्पुत्रः पञ्चविंशतिं वर्षाणि यावत् यदि मम गृहे कार्यं करिष्यति तर्हि तेन लब्धं धनं मया संरक्ष्यते । पञ्चविंशतिवर्षानन्तरम् अहं भवतः पुत्राय तद् धनं दास्यामि । तेन सः अनन्तरकाले सुखेन जीविष्यति । व्यर्थं विचारं त्यजतु'' इति तं बोधितवती ।

एतत् श्रुत्वा रघुवीरः असहायः सन् तस्याः

वचनानुगुणं स्वपुत्रं तस्याः गृहे एव कर्मकरत्वेन नियोज्य स्वयम् आम्रोद्यानस्य निर्वहणकार्यं स्वीकृतवान् ।



कानिचन वर्षाणि अतीतानि । अथ कदाचित् आकस्मिकतया रघुवीरः केनापि व्याधिना पीडितः सन् मृतः अभवत् । तस्य मरणानन्तरं वर्षाभ्यन्तरे धनिकस्य पत्नी भानुमती राजारामस्य विवाहं कारितवती । अपि च तस्य पत्नीं चम्पानामिकां स्वगृहकार्ये नियोज्य राजारामम् उद्यानपालकत्वेन नियोजितवती अपि ।

षट् वर्षाणि अतीतानि । राजारामस्य पुत्रः रघुरामः इदानीं षड्वर्षीयः । सः महाबुद्धिमान् चतुरश्च । ग्रामे स्थितायां शालायां पठन् सः सर्वासु परीक्षासु उत्तमं फलितांशं प्राप्तवान् । पुत्रस्य बुद्धिमत्तां दृष्ट्वा राजारामः पत्नीं चम्पाम् उक्तवान् - ''मया तु विद्या न प्राप्ता । अतः मम पुत्रो वा विद्यावान् भवतु'' इति ।

चम्पा एतत् श्रुत्वा निराशतया उक्तवती - ''भवतः चिन्तनं समीचीनमेव । किन्तु तदर्थम् आवश्यकं धनं भवान् कुतः सङ्गृह्णाति ? आयः यावान् अस्ति तावान् एव व्ययोऽपि अस्ति । किमपि न सङ्गृहीतम् आवाभ्याम् । एवं स्थिते कथं पुत्रं शिक्षयेम ?'' इति ।

तदा राजारामः किञ्चित् विचिन्त्य उक्तवान् - ''धनिकस्य भूपतेः गृहे सर्वमपि दायित्वं पत्न्याः भानुमत्याः एव । सर्वोऽपि अधिकारः तस्याः एव । दशमे वयसि तद्गृहे कर्मकरत्वेन नियोजितः अभवम् अहम् । तदा भानुमतीवर्यया वचनं दत्तम् आसीत् यद् अहं पञ्चविंशतिवयस्कः यदा भविष्यामि तदा तावतां वर्षाणां वेतनम् एकवारमेव दास्यते इति । इदानीं तथा सङ्गृहीतं धनं दशसहस्ररूप्यकात्मकं स्यात् । तेन धनेन अहं नगरे किमपि वाणिज्यं करिष्यामि । नगरे यदि वासः आरप्स्यते तर्हि पुत्रस्य शिक्षणमपि सुकरं भविष्यति'' इति । चम्पा एतं प्रस्तावम् अङ्गीकृतवती ।

राजारामः स्वस्य विचारं सर्वं श्रावयितुं भूपतेः गृहं गतः । यदा भानुमतीं सः स्वनिश्चयम् उक्तवान् तदा भूपतिरपि तत्रैव आसीत् । सर्वं श्रुत्वा भानुमत्या उक्तम् - ''भवतः पितुरपि एतादृशः एव कश्चन स्वप्नः आसीत् । मार्जार्याः उदरे यथा मार्जारः एव जन्म प्राप्नोति, तथैव कर्मकर्याः उदरे कर्मकरः एव जायते । अपि च धनविषयः यः भवता



उक्तः तं विषयम् अहं न जानाम्येव । भवतः किमपि धनं अस्मत्समीपे नास्ति । भवतः पिता बहुपूर्वमेव तद्धनं स्वीकृतवान्'' इति ।

तत्रैव उपविष्टः भूपतिः पत्न्या उक्तं सर्वमपि असत्यम् इति जानन्नपि भीत्या तूष्णीं स्थितवान् ।

राजारामः विना वचनं ततः प्रस्थाय गृहं प्रत्यागतः । तद्दिने रात्रौ महती वृष्टिः सञ्जाता । वृष्ट्या आम्रोद्यानस्य गतिः का इति चिन्तया भूपतिभानुमत्योः निद्रा एव न आसीत् ।

उषःकाले एव तौ उभावपि शकटेन आम्रोद्यानम् आगतौ । तत्र चम्पा पुत्रेण सह उपविष्टा आसीत् । राजारामः तत्र न दृष्टः । उद्यानं वृष्ट्या बहुदुरवस्थां प्राप्तवत् आसीत् । एतत् दृष्ट्वा भानुमती नितरां दुःखिता जाता । चम्पां पश्यन्ती सा कोपेन पृष्टवती - ''भवत्याः पतिः कुत्र ? भवद्भिः किमर्थम् इतोऽपि कार्यं न आरब्धम् ?'' इति ।

तदा चम्पा पुत्रं लालयन्ती उक्तवती - ''आर्ये ! ह्यः रात्रौ काचन घटना घटिता । वृष्टिसमये कश्चन आगत्य द्वारं ताडितवान् । मम पतिः द्वारम् उद्घाट्य दृष्टवान् । कश्चन वृद्धः साधुः तत्र स्थितः आसीत् । सः पूर्णतया आर्द्रः आसीत् । सः साधुः - 'महती बुभुक्षा मां बाधते, खादितुं किमपि दीयताम्, किञ्चित् अन्नं तक्रं च अस्ति चेदपि पर्याप्तम्' इति कम्पमानेन स्वरेण उक्तवान् । सः साधुः महिमवान् इति अस्माकं मनसि अभासत । पात्रे किञ्चित् अन्नम् अवशिष्टम् आसीत् । तदेव अस्माभिः दत्तम् । तत् स्वीकृत्य भुक्त्वा सः तक्रं पीतवान् । ततः किमपि अवदन् तादृश्यां वृष्ट्यामेव प्रतिगतवान् । तस्य गमनानन्तरम् अस्माभिः तेन साधुना यस्मिन् भुक्तं तत् पात्रं, चषकं च सुवर्णमयं जातं दृष्टम् । अस्माभिः ज्ञातं यत् तस्य साधोः स्पर्शः एव अस्य कारणम् इति । प्रभाते एव मम पतिः नगरं गतवान् अस्ति । तत् सुवर्णपात्रं विक्रीय नगरे किमपि वाणिज्यं कर्तुम् इच्छति सः'' इति ।

स्वगृहे स्थितस्य कर्मकरस्य भाग्यं दृष्टवत्यां भानुमत्याम् असूया उत्पन्ना । अतः सा असूयादृष्ट्या चम्पां पश्यन्ती विना वचनं ततः निर्गता पत्या सह ।

तस्मिन् दिनेऽपि सूर्यस्य अस्तमनानन्तरं महती वृष्टिः आरब्धा । रात्रौ भूपतिः सम्यक् आच्छाद्य सुप्तः । भानुमती वातायनं पिधातुं वातायनसमीपं गता । विद्युतः प्रकाशे तया

कश्चन साधुः दृष्टः । चम्पया यादृशः वर्णितः आसीत् तादृशः एव साधुः एषः । भानुमती अतीव हृष्टा जाता ।

सा झटिति द्वारम् उद्घाट्य तम् अन्तः आह्वयन्ती उक्तवती – ''अन्तः आगच्छतु स्वामिन् । वृष्ट्या भवान् आर्द्रः जातः अस्ति'' इति ।

अन्तः आगच्छन् स साधुः – ''महती बुभुक्षा । खादनार्थं किमपि अस्ति किम् ?'' इति पृष्टवान् । तस्य कथने स्पष्टता न आसीत् ।

भानुमती तस्मै नूतनं वस्त्रं दत्त्वा तं भोजनपीठस्य पुरतः उपवेशितवती । ततः पाकगृहं गत्वा खाद्यं, चषकेण जलं च आनीय दत्तवती ।

खादनानन्तरं सः साधुः – ''भवती अन्नपूर्णावत् मम बुभुक्षां निवारितवती'' इति वदन् गन्तुं सिद्धः जातः । तदा भानुमती – ''वृष्टिः इतोऽपि न स्थगिता । अतः अस्याः लोहपेटिकायाः उपरि शयानः भवान् विश्रान्तिं स्वीकरोतु । प्रातः गच्छतु'' इति उक्तवती ।

साधुः हसन् तस्याः लोहपेटिकायाः उपरि शयितुं सिद्धः जातः । भानुमती महता सन्तोषेण शयनगृहं प्रविष्टवती ।

रात्रौ विलम्बेन शयितम् इति कारणात् प्रातः सप्तवादने भानुमत्याः जागरणम् अभवत् । उत्थानानुक्षणं रात्रौ साधुना शयितं प्रकोष्ठं प्रति गतवती सा । किन्तु तत्र साधुः न आसीत् । तया तदा चिन्तितं यत् लोहपेटिका सुवर्णमयी सञ्जाता स्यात् इति । अतः पेटिकासमीपं गत्वा सा सावधानेन दृष्टवती । किन्तु तस्यां किमपि परिवर्तनं न सञ्जातम् आसीत् । सा पेटिका यथा लोहमयी आसीत् तथैव आसीत् इदानीमपि । किन्तु पेटिका पूर्णतया उद्घाटिता आसीत् । एतत् दृष्ट्वा भानुमत्या उच्चैः आक्रोशनं कृतम् ।

पुनः पुनः पेटिकां पश्यन्ती प्रलपनं कुर्वती – ''कश्चन चोरं साधुं मन्यमाना अहं गृहम् आहूय खादितुं दत्तवती । किन्तु तेन चोरेण पेटिकायां स्थितानि सर्वाणि आभरणानि,



सुवर्णमुद्राश्च चोरिताः । मम सर्वा सम्पत् नष्टा'' इति कथयन्ती सा मनसि जायमानं विप्लवं सोढुं न शक्ता । तस्याः हस्तपादं कम्पमानं जातम् । उच्चैः आक्रन्दन्ती सा भूमौ पतिता ।

भानुमत्याः आक्रन्दनं श्रुत्वा भूपतिः तत्र आगतः । तदा भानुमती - 'धनम्' 'चोरः' 'साधुः' इत्यादीनि असम्बद्धानि वचनानि प्रलपन्ती आसीत् । भूपतिः झटिति पेटिकायाः अन्तः दृष्टवान् । तस्याम् आभरणानि स्वर्णमुद्राः इत्यादीनि अमूल्यानि वस्तूनि तथैव आसन् । किन्तु एकः धनस्यूतः तत्र न आसीत्, यस्मिन् पञ्चविंशितिवर्षानन्तरं दास्यामि इति राजारामम् उक्त्वा भानुमत्या धनं सङ्गृहीतम् आसीत् ।

एतस्य परिशीलनात् भूपतिः ज्ञातवान् - 'पूर्वस्मिन् दिने आगतः साधुः न, अपि तु राजारामः एव' इति । राजारामः धनस्यूत-मात्रमेव इष्टवान् आसीत्, यस्मिन् च तदीयस्य परिश्रमस्य फलम् आसीत् । कर्मकरस्य राजारामस्य निष्कपटव्यवहारं दृष्टवतः भूपतेः महत् आश्चर्यं सञ्जातम्, आनन्दोऽपि जातः ।

सः प्रीत्या भानुमतीं स्पृशन् उक्तवान् - ''अस्माकं धनं सर्वं सुरक्षितमेव अस्ति । भीतिः मास्तु'' इति ।

किन्तु भानुमती उपवेष्टुमपि न शक्ता । पूर्ववत् प्रलपन्ती एव आसीत् सा । भूपतिः वैद्यम् आनायितवान् ।

वैद्यः तां सम्यक् परीक्ष्य उक्तवान् - ''आकस्मिकघटनया एतस्याः मनः चलितम् अभवत् । अतः पञ्चषान् मासान् यावत् एतस्याः मनसः क्लेशः यथा न भवेत् तथा एषा पालनीया । अहं योग्यम् औषधं ददामि'' इति ।

सप्त मासाः अतीताश्चेदपि भानुमत्याः मानसिकी भ्रान्तिः न अपगता । 'मम पूर्णं सुवर्णं नष्टम्' 'सर्वं नष्टम्' इति प्रलपन्ती एव भवति स्म सा ।

अनया दुर्घटनया भूपतिः खिन्नः । सः सुदीर्घम् आलोच्य ग्रामप्रमुखैः सह सम्मन्त्र्य तेषां सूचनानुसारं ग्रामे दरिद्रविद्यार्थिनां कृते शुल्करहिताम् एकां पाठशालाम् आरब्ध-वान् । 'भूपतिवर्येण योग्यं कार्यं कृतम्' इति उक्तवन्तः सर्वे जनाः ।





# चतुरः चित्रकारः

भारतस्य मध्यदेशे स्थितः कश्चन चित्रकारः यवनदेशं गतः । तत्र कश्चन तन्त्रवादी आसीत् । सः तन्त्रशास्त्रे महानिपुणः आसीत् । सः तन्त्रवादी एनं चित्रकारम् उद्दिश्य – "भवान् मम गृहे एव वासं करोतु" इति उक्तवान् । सः तस्य चित्रकारस्य आतिथ्याय काञ्चन यान्त्रिकस्त्रियं योजितवान् । सा अनेन तन्त्रवादिना एव निर्मिता आसीत् ।

सा यान्त्रिकस्त्री चित्रकारस्य पादक्षालनं कुर्वती आसीत् । तस्याः दर्शनेन व्यवहारेण च भासते स्म यत् एषा न यन्त्रनिर्मिता, अपि तु सत्यमेव मानवस्त्री इति । चित्रकारः तां स्त्रियमेव मन्यते स्म । अतः सः कदाचित् तया सह वार्तालापं कर्तुम् इच्छन् तां काञ्चन प्रश्नान् पृष्टवान् । किन्तु तया किमपि उत्तरं न दत्तम् ।

तदा सः चित्रकारः तस्याः हस्तस्य आकर्षणं कृतवान् । तस्य आकर्षणेन मूर्तौ संलग्नः भागः वियुक्तः । सा मूर्तिः अधः पतिता । तदा चित्रकारेण ज्ञातं यत् एषा न स्त्री, अपि तु यन्त्रनिर्मिता इति । एतत् दृष्टवतः चित्रकारस्य मनसि तस्य तन्त्रवादिनः बुद्धिमत्ताविषये महद् आश्चर्यम् उत्पन्नम् । आश्चर्येण सह दुःखमपि अभवत् तस्य । 'एषः तन्त्रवादी माम् एतं विषयं न उक्तवान् । अस्याः मूर्त्याः विषयम् अनुक्त्वा माम् अपमानितवान् एषः' इति सः चिन्तितवान् । एषः विषयः चित्रकारं बाधते स्म । अतः अस्य अपमानस्य प्रतीकारः करणीयः एव इति निश्चित्य सः निर्णीतवान् यत् मदीयम् अद्भुतं सामर्थ्यं तन्त्रवादिने प्रदर्शयिष्यामि एव इति ।

ततः तेन चित्रकारेण तादृशम् एकं चित्रं निर्मितं यत्र च चित्रकारः आत्मानं उद्बन्धितं कृतवान् इव दृश्यते स्म । कोऽपि गमनसमये प्रकोष्ठं प्रति यदि दृष्टिं प्रसारयेत् तर्हि तेन तच्चित्रं यथा दृश्येत तथा तत् चित्रं सः स्वस्य

प्रकोष्ठस्य पुरतः स्थापितवान् आसीत् । एवं कृत्वा सः चित्रकारः आत्मानं तत्रैव स्थितायां काष्ठराशौ गुहितवान् ।

किञ्चित्समयानन्तरं तन्त्रवादी तस्य प्रकोष्ठस्य पुरतः गच्छन् उद्घाटितं प्रकोष्ठं दृष्ट्वा अन्तः दृष्टिं प्रसारितवान् । तत्र सः अधः पतितां यान्त्रिकस्त्रियम्, उद्बन्धितं चित्रकारं च दृष्टवान् ।

तस्य दर्शनेन तन्त्रवादिनि भयम् उत्पन्नम् । आत्मना निर्मिता यान्त्रिकस्त्री नष्टा इति विषये तस्य चिन्ता न आसीत् । किन्तु भारतदेशात् आगत्य अत्र वसतः चित्रकारस्य मरणं तस्मिन् दुःखम् अजनयत् । 'एषा मम अपकीर्तये भवेत् कदाचित् । अद्यैव सर्वकारस्य अधिकारिणः आगत्य अस्य विषये यथायोग्यं विचारणां कुर्युः चेदेव वरम् । तदा तैः वस्तुस्थितिः ज्ञायेत' इति सः चिन्तितवान् ।

एवं विचिन्त्य सः राजसभां गत्वा तत्र गृहे प्रवृत्तं समग्रं वृत्तान्तं श्रावितवान् । राजा सर्वं श्रुत्वा तत्रत्यां परिस्थितिं ज्ञातुं कांश्चन अधिकारिणः तन्त्रवादिनः गृहं प्रति प्रेषितवान् ।

अधिकारिणः आगत्य चित्रकारस्य प्रकोष्ठं गताः । प्रकोष्ठे भूमौ स्थितं चित्रकारस्य शवं ते दृष्टवन्तः ।

कथम् अस्य शवस्य अधः अवतारणम् इति विचिन्त्य ते अधिकारिणः चित्रकारस्य कण्ठे स्थितां रज्जुं कर्तयितुं खड्गः शूलम् इत्यादीनि आयुधानि आनीतवन्तः ।

तदा प्रकोष्ठे रहसि स्थितः चित्रकारः तेषां अधिकारिणां पुरतः आगतः । तं दृष्ट्वा सर्वेऽपि विस्मिताः ।

चित्रकारः तन्त्रवादिनम् उक्तवान् - "महोदय ! आत्मना निर्मितां स्त्रियं मम सेवां कर्तुं नियोज्य भवता मयि भ्रमः उत्पादितः । एतेन मयि रोषः उत्पन्नः । अतः मया अपि भ्रमजनकं कृत्यं कृतम् । भवतः बुद्धिमत्ता माम् एकम् एव भ्रमे पातयितुं समर्था अभवत् । मम बुद्धिमत्ता तु न केवलं भवन्तम्, अपि च राज्ञा प्रेषितान् अधिकारिणः अपि भ्रमगर्ते अपातयत्" इति ।

एतत् श्रुत्वा लज्जितः तन्त्रवादी शिरः अवनमय्य स्थितवान् ।

भारतदेशस्य चित्रकारं सः तन्त्रवादी, अन्ये अधिकारिणः च बहुधा प्रशंसितवन्तः ।



# आर्यः

## राजकुमारस्य अज्ञातं रहस्यम्

5

शान्तिपुरे अशान्तिः दृश्यते । राजा शान्तिदेवः सुरङ्गमार्गेण गमनाय सपुत्रायाः पत्न्याः साहाय्यं करोति । ततः तेन वीरसिंहस्य सैनिकाः सम्मुखीकृताः दुर्गभित्तिपार्श्वस्थायां नद्याम् उत्कूर्दितं च । जयानन्दः तच्छिष्याः च एकं शिशुं स्त्रियं च प्राप्नुवन्ति । तेषां पुरतः स्त्री मरणं प्राप्नोति । तस्याः शवः केनचित् रक्षणीयः । तत् को वा कुर्यात् ?

चित्रम् - गान्धि-अय्यः



ऋषिः तच्छिष्याः च आश्रमं प्रत्यागच्छन्ति । अरण्यस्थाः पशुपक्षिणः तेषाम् अभिवादनं कुर्वन्ति ।











कृष्णमुखः वानरः वृक्षात् अवतरति । अन्ये पशवः अपि तत्र सम्मिलिताः भवन्ति । वृद्धया भल्लूक्या पाल्यमानः सः शिशुः अनेकेषां पशूनां सहवासं प्राप्य नितरां प्रमुदितः अस्ति ।

अनुवर्तते

# पृष्टोऽयं भवताम् पृष्टोऽयं भवताम्

## विज्ञायतां विज्ञानम्

### 'इण्डियं' लोहः

'इण्डियं' लोहः मृदुः, सुनम्यः, कान्तियुक्तः, राजतवर्णयुक्तः च भवति । 'In' इति अक्षरयुगलेन सः निर्दिश्यते । तदीया मूलवस्तुसंख्या ४९ । तदीयः परमाणुभारः ११४.८२ । १८६३तमे वर्षे एफ्.रिच्, एच्. रिच्चर् इत्येताभ्याम् एषः लोहः असंस्कृतधात्वागारे अन्विष्टः । एषः अपि रजतम् इव विरललभ्यः एव । अयस्सीसादिभिः खनिजधातुभिः सह मिलितः सन् एषः उपलभ्यते । इण्डिगो नाम नीलः वर्णः इत्यर्थः । एषः प्रकृष्टं नीलवर्णं वहति इत्यतः 'इण्डियम्' इति एतस्य नाम जातम् ।



अधिकोष्णतायुक्तदशायाम् एषः लोहः द्रवरूपेण उपलभ्यते । अयस्किट्टप्रतिरोधशक्तिः रजतस्य यावती अस्ति ततोऽपि अधिका भवति एतस्य । दर्पणतलनिर्माणे एतस्य उपयोगः भवितुम् अर्हति । रजतं यथा तथैव एषः अपि प्रतिबिम्बोत्पादकः भवति । सामान्योष्णतायाम् इण्डियंलोहः 'आक्सैड्'रूपं न प्राप्नोति । किन्तु द्रावणबिन्दुस्तरात् ऊर्ध्वम् अपि यदि उष्णीक्रियते तर्हि एषः जम्बीरवर्णेन ज्वलति । एतस्य आक्सैड्रूपं काचकनिर्माणे उपयुज्यते । पीतवर्णतां विधातुम् एतत् उपयुज्यते ।

'बेरिङ्ग्'कार्यसमये एतस्य लेपनं क्रियते । आम्लानां घर्षणस्य च प्रतिरोधं करोति एषः । आकाशवाणीयन्त्रेषु सौरयन्त्रेषु च एतेन मिश्रितानां धातूनाम् उपयोगः क्रियते ।

## परिसरसंरक्षणम्

### मा उपयुज्यतां प्रयाणे प्लास्टिक्



यदि भवतां गृहं रैलमार्गस्य पार्श्वे एव स्यात्, यदि च तत्र प्रयाणं कुर्वद्भिः क्षिप्तानां वस्तूनां कारणतः जायमाना पीडा भवतः सदा व्यथयेत् तर्हि का स्थितिः स्यात् भवतां मनसः ? चित्तस्वास्थ्यं नश्येत्, क्रोधश्च उद्भवेत् । एवं ननु ?

लक्षशः कोटिशः वा जनाः एतादृशम् एव भावं वहन्ति रैल्यानेन प्रयाणं कुर्वताम् अस्माकं विषये ।

रैलयानमार्गम् उभयतः प्लास्टिक्चषकाः, प्लास्टिक्स्थालिकाः, प्लास्टिक्मय्यः जलकूप्यः, कदलीत्वचः, अण्डावरणानि इत्यादयः पतिताः दृश्यन्ते सर्वत्र । एतेषां क्षेपणसमये ग्रामीणानां नागरिकाणां च विषये वयं न चिन्तयामः एव ।

परिसरहानेः न्यूनीकरणाय प्रयाणावसरे अनुसर्तुम् अर्हाः केचन उपायाः सन्ति अत्र –

- प्रयाणावसरे गृहतः चषकं नयन्तु । काफीचायादीनां पानसमये तस्य उपयोगं कुर्वन्तु । तस्मात् प्लास्टिक्चषकाणाम् उपयोगः निवारयितुं शक्यः ।
- जलपात्रं गृहात् नयन्तु । प्रयाणसमये जलकूपेः क्रयणं दुरभ्यासः । तं त्यजन्तु कृपया ।

# पृष्टोऽयं भवताम् पृष्टोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### पाटलपुष्पस्य उपयोगः

आ बहोः कालात् कवयः, लेखकाः, प्रेमिणः च पाटलपुष्पं 'पुष्पाणां राज्ञीं' मतवन्तः सन्ति । तत् प्रेम्णः अनुरागस्य च सङ्केतः । किन्तु तावदेव तस्य स्वरूपं न । अन्ये अपि बहुविधाः उपयोगाः सन्ति तस्य ।

बहवः युरोपजनाः तत् रहस्यस्य सङ्केतरूपेण उपयुञ्जते । इंग्लेण्ड्देशे सेवकाः तत् पुष्पं कर्णे धरन्ति । तस्य तात्पर्यं यत् सकृत् श्रुतम् अन्यत्र कुत्रापि न उच्यते इति । जर्मनीयस्य गृहे स्थितं पाटलपुष्पसहितं पात्रं सूचयति यत् अतिथिः अत्र निस्सङ्कोचं सम्भाषणं कर्तुम् अर्हति इति । पाटलमुकुलम् अस्ति चेत् विषयः गोपन-विषयकः इति अर्थः ।



इजिप्शियन्जनाः पञ्चसहस्राधिकवर्षेभ्यः पूर्वम् एव पाटलपुष्पकृषिं ज्ञातवन्तः आसन् । मरणानन्तरं शवनिखननसमये पाटलपुष्पस्थापनप्रथा अपि आसीत् तत्र ।

प्राचीनाः रोमजनाः पाटलपुष्पेभ्यः मद्यं निर्मान्ति स्म । पयोहिमं सुगन्धीकर्तुं पाटलपुष्परसः उपयुज्यते स्म । फलरसनिर्माणसमये तु पाटलदलानि एव उपयुज्यन्ते स्म । पाटलरसः, पाटलतैलं च औषधनिर्माणक्षेत्रे उपयुज्यते स्म आ प्राचीनकालात् । अद्यापि पाटलतैलं सुगन्धद्रव्याणाम् अलङ्कार-साधनानां च निर्माणे उपयुज्यते । आसवनिर्माणे सुगन्धार्थम् अपि एतत् उपयुज्यते ।

## ज्ञानशक्तिः वर्ध्यताम्

### एतस्याः प्रश्नावल्याः मुख्यविषयः अस्ति - निसर्गः

१. 'टैड्डि'भल्लूक-शिशुरूपा पाञ्चालिका बालानाम् अतिप्रिया । यस्य प्रतिरूपं तत्र उपयुज्यते सः कः ?





२. वृक्षतृणयोः कतरः भूमौ ऐदम्प्राथम्येन उद्भूतः ?



३. शलभस्य कर्णौ कुत्र भवतः ?



४. सर्वे गृध्राः शवस्य समीपं युगपत् एव किम् अभिपतन्ति ?



५. जलाहेः मण्डूकस्य च साम्यांशः कः ?

(उत्तराणि ६६ तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा



**अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-सम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**


SOURAA


SOURAA

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'नवेम्बर्'मासस्य चित्रशीर्षिकाप्रेषकः -**

**आदर्श गोखले**

*एस्.बि.प्रौढशाला, कार्कळ - ५७४१०४*

*जि. उडुपि, कर्णाटकम्*

**पुरस्कृता शीर्षिका**





**कृष्णायमानः बालः हसन् चालयति यानम् ।**
**राधायमाना बाला म्लाना वादयति वेणुम् ॥**

## ज्ञानशक्तिः वर्ध्यताम्

१. अमेरिकाध्यक्षेण थियोडर् रूसवेल्टेन कदाचित् कृष्णभल्लूकशावकः प्राप्तः आसीत् । तस्य एव प्रतिरूपम् उपयुज्यते ।

२. वृक्षाकारकाणि सस्यानि एव आदौ उत्पन्नानि, तृणानाम् उत्पत्तितः पूर्वम् ।

३. ध्वनिग्राहकम् अङ्गं तस्य अग्रिमपादयोः स्थिते लघुगर्ते भवति । अग्रिमपादस्य सञ्चारात् ते ध्वनिमूलम् अभिज्ञातुम् अर्हन्ति ।

४. न । तत्र कश्चन क्रमः अस्ति । प्रबलः नायकसदृशः आदौ मांसं खादति । दुर्बलाः अवकाशं प्रतीक्षमाणाः अन्ते खादन्ति ।

५. जलाहिः अपि मण्डूकः इव चर्मद्वारा श्वासोच्छ्वासं करोति ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)



# AN IDEAL NEW YEAR GIFT

*to your near and dear abroad*

## CHANDAMAMA
## CHANDAMAMA bilingual

in Hindi-English, Telugu-English, Tamil-English
published for Indian families in
USA and Cananda

**Different from the Indian editions in size, layout and design**

**Helps the reader to keep in touch with mother tongue.**

**Remit only Rs.1,500 for an overseas GIFT subscription and save more than Rs.600**

**Special offer closes on February 29,2004**

*Remittances by D/D in favour of*

Chandamama India Ltd.
82, Defence Officers Colony, Ekkaduthangal, Chennai - 600 097
**Indicating the bilingual edition preferred and full name and address of friend / relative living abroad.**

Send Rs.50 by M.O. for specimen copy

For residents in USA/Canada one-year subscription US $ 48.00.
Contact Nataka at rganesh@bellsouth.net

